ह्रींकारवाच्या ह्रींकारपूज्या ह्रींकारपीठिका ।
ह्रींकारवेद्या ह्रींकारचिन्त्या ह्रीं ह्रींशरीरिणी ।।१९।।
हकाररूपा हलधृक्पूजिता हरिणेक्षणा ।
हरप्रिया हराराध्या हरिब्रह्मेन्द्रवन्दिता ।।२०।।
हयारूढासेविताङ्घ्रिर्हयमेधसमर्चिता ।
हर्यक्षवाहना हंसवाहना हतदानवा ।।२१।।
हत्यादिपापशमनी हरिदश्वादिसेविता ।
हस्तिकुम्भोत्तुङ्गकुचा हस्तिकृत्तिप्रियाङ्गना ।।२२।।
हरिद्राकुङ्कुमादिग्धा हर्यश्वाद्यमरार्चिता ।
हरिकेशसखी हादिविद्या हालामदालसा ।।२३।।
सकाररूपा सर्वज्ञा सर्वेशी सर्वमङ्गला ।
सर्वकर्त्री सर्वभर्त्री सर्वहर्त्री सनातनी ।।२४।।
सर्वानवद्या सर्वाङ्गसुन्दरी सर्वसाक्षिणी ।
सर्वात्मिका सर्वसौख्यदात्री सर्वविमोहिनी ।।२५।।
सर्वाधारा सर्वगता सर्वावगुणवर्जिता ।
सर्वारुणा सर्वमाता सर्वाभरणभूषिता ।।२६।।
ककारार्था कालहन्त्री कामेशी कामितार्थदा ।
कामसञ्जीवनी कल्या कठिनस्तनमण्डला ।।२७।।
करभोरुः कलानाथमुखी कचजिताम्बुदा ।
कटाक्षस्यन्दिकरुणा कपालिप्राणनायिका ।।२८।।
कारुण्यविग्रहा कान्ता कान्तिधूतजपावलिः ।
कलालापा कम्बुकण्ठी करनिर्जितपल्लवा ।।२९।।

कल्पवल्लीसमभुजा कस्तूरीतिलकाञ्चिता ।
हकारार्था हंसगतिर्हाटकाभरणोज्ज्वला ।।३०।।
हारहारिकुचाभोगा हाकिनी हल्यवर्जिता ।
हरित्पतिसमाराध्या हठात्कारहतासुरा ।।३१।।
हर्षप्रदा हविर्भोक्त्री हार्दसन्तमसापहा ।
हल्लीशलास्यसंतुष्टा हंसमन्त्रार्थरूपिणी ।।३२।।
हानोपादाननिर्मुक्ता हर्षिणी हरिसोदरी ।
हाहाहूहूमुखस्तुत्या हानिवृद्धिविवर्जिता ।।३३।।
हैय्यङ्गवीनहृदया हरिगोपारुणांशुका ।
लकाराख्या लतापूज्या लयस्थित्युद्भवेश्वरी ।।३४।।
लास्यदर्शनसंतुष्टा लाभालाभविवर्जिता ।
लङ्घ्येतराज्ञा लावण्यशालिनी लघुसिद्धिदा ।।३५।।
लाक्षारससवर्णाभा लक्ष्मणाग्रजपूजिता ।
लभ्येतरा लब्धभक्तिसुलभा लाङ्गलायुधा ।।३६।।
लग्नचामरहस्तश्रीशारदापरिवीजिता ।
लज्जापदसमाराध्या लम्पटा लकुलेश्वरी ।।३७।।
लब्धमाना लब्धरसा लब्धसम्पत्समुन्नतिः ।
ह्रींकारिणी च ह्रींकारी ह्रींमध्या ह्रींशिखामणिः ।।३८।।
ह्रींकारकुण्डाग्निशिखा ह्रींकारशशिचन्द्रिका ।
ह्रींकारभास्कररुचिः ह्रींकाराम्भोदचञ्चला ।।३९।।
ह्रींकारकन्दांकुरिका ह्रींकारैकपरायणा ।
ह्रींकारदीर्घिका हंसी ह्रींकारोद्यानकेकिनी ।।४०।।

ह्लींकारारण्यहरिणी ह्लींकारावालवल्लरी ।
ह्लींकारपञ्जरशुकी ह्लींकाराङ्गणदीपिका ।।४१।।
ह्लींकारकन्दरासिंही ह्लींकाराम्बुजभृङ्गिका ।
ह्लींकारसुमनोमाध्वी ह्लींकारतरुमञ्जरी ।।४२।।
सकाराख्या समरसा सकलागमसंस्तुता ।
सर्ववेदान्ततात्पर्यभूमिस्सदसदाश्रया ।।४३।।
सकला सच्चिदानन्दा साध्वी सद्गतिदायिनी ।
सनकादिमुनिध्येया सदाशिवकुटुम्बिनी ।।४४।।
सकलाधिष्ठानरूपा सत्त्वरूपा समाकृतिः ।
सर्वप्रपञ्चनिर्मात्री समानाधिकवर्जिता ।।४५।।
सर्वोत्तुङ्गा सङ्गहीना सगुणा सकलेष्टदा ।
ककारिणी काव्यलोला कामेश्वरमनोहरा ।।४६।।
कामेश्वरप्राणनाडी कामेशोत्सङ्गवासिनी ।
कामेश्वरालिङ्गिताङ्गी कामेश्वरसुखप्रदा ।।४७।।
कामेश्वरप्रणयिनी कामेश्वरविलासिनी ।
कामेश्वरतपस्सिद्धिः कामेश्वरमनःप्रिया ।।४८।।
कामेश्वरप्राणनाथा कामेश्वरविमोहिनी ।
कामेश्वरब्रह्मविद्या कामेश्वरगृहेश्वरी ।।४९।।
कामेश्वराह्लादकरी कामेश्वरमहेश्वरी ।
कामेश्वरी कामकोटिनिलया कांक्षितार्थदा ।।५०।।
लकारिणी लब्धरूपा लब्धधीर्लब्धवाञ्छिता ।
लब्धपापमनोदूरा लब्धाहङ्कारदुर्गमा ।।५१।।

लब्धशक्तिर्लब्धदेहा लब्धैश्वर्यसमुन्नतिः ।
लब्धवृद्धिर्लब्धलीला लब्धयौवनशालिनी ।।५२।।
लब्धातिशयसर्वाङ्गसौन्दर्या लब्धविभ्रमा ।
लब्धरागा लब्धपतिर्लब्धनानागमस्थितिः ।।५३।।
लब्धभोगा लब्धसुखा लब्धहर्षाभिपूरिता ।
ह्रींकारमूर्तिर्ह्रींङ्कारसौधशृङ्गकपोतिका ।।५४।।
ह्रींकारदुग्धाब्धिसुधा ह्रींकारकमलेन्दिरा ।
ह्रीङ्कारमणिदीपार्चिर्ह्रीङ्कारतरुशारिका ।।५५।।
ह्रीङ्कारपेटकमणिर्ह्रीङ्कारादर्शबिम्बिता ।
ह्रीङ्कारकोशासिलता ह्रीङ्कारास्थाननर्त्तकी ।।५६।।
ह्रीङ्कारशुक्तिकामुक्तामणिर्ह्रीङ्कारबोधिता ।
ह्रीङ्कारमयसौवर्णस्तम्भविद्रुमपुत्रिका ।।५७।।
ह्रीङ्कारवेदोपनिषद् ह्रीङ्काराध्वरदक्षिणा ।
ह्रीङ्कारनन्दनारामनवकल्पद्रुवल्लरी ।।५८।।
ह्रीङ्कारहिमवद्गङ्गा ह्रीङ्कारार्णवकौस्तुभा ।
ह्रीङ्कारमन्त्रसर्वस्वा ह्रीङ्कारपरसौख्यदा ॐ ।।५९।।

श्रीहयग्रीव उवाच -

इत्येवं ते मयाऽऽख्यातं देव्या नाम शतत्रयम् ।
रहस्यातिरहस्यत्वाद् गोपनीयं महामुने ।।६०।।
शिववर्णानि नामानि श्रीदेवीकथितानि हि ।
शक्त्यक्षराणि नामानि कामेशकथितानि च ।।६१।।
उभयाक्षरनामानि ह्युभाभ्यां कथितानि वै ।
तदन्यैर्ग्रथितं स्तोत्रमेतस्य सदृशं किमु ।।६२।।

नानेन सदृशं स्तोत्रं श्रीदेवीप्रीतिदायकम् ।
लोकत्रयेऽपि कल्याणं सम्भववेन्नात्र संशयः ।।६३।।

सूत उवाच -

इति हयमुखगीतं स्तोत्रराजं निशम्य
प्रगलितकलुषोऽभूच्चित्तपर्याप्तिमेत्य ।
निजगुरुमथ नत्वा कुम्भजन्मा तदुक्तं
पुनरधिकरहस्यं ज्ञातुमेवं जगाद ।।६४।।

अगस्त्य उवाच -

अश्वानन महाभाग रहस्यमपि मे वद ।
शिववर्णानि कान्यत्र शक्तिवर्णानि कानि हि ।
उभयोरपि वर्णानि कानि मे वद देशिक ।।६५।।

सूत उवाच -

इति पृष्टः कुम्भजेन हयग्रीवोऽवदत्पुनः ।
तव गोप्यं किमस्तीह साक्षादम्बाकटाक्षतः ।।६६।।
इदं त्वतिरहस्यं ते वक्ष्यामि शृणु कुम्भज ।
एतद्विज्ञानमात्रेण श्रीविद्या सिद्धिदा भवेत् ।।६७।।
कात्रयं हद्वयं चैव शैवो भागः प्रकीर्तितः ।
शक्त्यक्षराणि शेषाणि ह्रींकार उभयात्मकः ।।६८।।
एवं विभागमज्ञात्वा श्रीविद्याजपशालिनः ।
न तेषां सिद्धिदा विद्या कल्पकोटिशतैरपि ।।६९।।
चतुर्भिश्शिवचक्रैश्च शक्तिचक्रैश्च पञ्चभिः ।
नवचक्रैस्तु संसिद्धं श्रीचक्रं शिवयोर्वपुः ।।७०।।

त्रिकोणमष्टकोणं च दशकोणद्वयं तथा ।
चतुर्दशारं चैतानि शक्तिचक्राणि पञ्च वै ।।७१।।
बिन्दुश्चाष्टदलं पद्मं पद्मं षोडशपत्रकम् ।
चतुरश्रं च चत्वारि शिवचक्राण्यनुक्रमात् ।।७२।।
त्रिकोणे बैन्दवं श्लिष्टमष्टारेऽष्टदलाम्बुजम् ।
दशारयोष्षोडशारं भूपुरं भुवनाश्रके ।
शैवानामपि शाक्तानां चक्राणां च परस्परम् ।।७३।।
अविनाभावसम्बन्धं यो जानाति स चक्रवित् ।
त्रिकोणरूपिणी शक्तिर्बिन्दुरूपश्शिवस्स्मृतः ।।७४।।
अविनाभावसम्बन्धस्तस्माद्बिन्दुत्रिकोणयोः ।
एवं विभागमज्ञात्वा श्रीचक्रं यस्समर्चयेत् ।।७५।।
न तत्फलमवाप्नोति ललिताम्बा न तुष्यति ।
ये च जानन्ति लोकेऽस्मिन् श्रीविद्याचक्रवेदिनः ।।७६।।
सामान्यवेदिनस्ते वै विशेषज्ञोऽतिदुर्लभः ।
स्वयं विद्याविशेषज्ञो विशेषज्ञं समर्चयेत् ।।७७।।
तस्मै देयं ततो ग्राह्यं श्रीविद्याचक्रवेदिना ।
अन्धं तमः प्रविशन्ति ये ह्यविद्यामुपासते ।।७८।।
इति श्रुतिरपाहैतानविद्योपासकान् पुनः ।
विद्यानुपासकानेव निन्दत्यारुणिकी श्रुतिः ।।७९।।
अश्रुता सश्रुतासश्च यज्वानो येऽप्ययज्वनः ।
स्वर्यन्तो नानपेक्षन्त इन्द्रमग्निं च ये विदुः ।।८०।।
सिकता इव संयान्ति रश्मिभिस्समुदीरिताः ।
अस्माल्लोकादमुष्माच्चेत्याह चारण्यकी श्रुतिः ।।८१।।

यस्य नो पश्चिमं जन्म यदि वा शङ्करस्स्वयम् ।
तेनैव लभ्यते विद्या श्रीमत्पञ्चदशाक्षरी ।।८२।।
इति तन्त्रेषु बहुधा विद्याया महिमोच्यते ।
मोक्षैकहेतुविद्या तु श्रीविद्यैव न संशयः ।।८३।।
न शिल्पादिज्ञानयुक्ते विद्वच्छब्दः प्रयुज्यते ।
मोक्षैकहेतुविद्या सा श्रीविद्यैव न संशयः ।।८४।।
तस्माद् विद्याविदेवात्र विद्वान् विद्वानितीर्यते ।
स्वयं विद्याविशेषज्ञो विद्यामाहात्म्यवेद्यपि ।।८५।।
विद्याविदं नार्चयेच्चेत् को वा तं पूजयेज्जनः ।
प्रसंगादेतदुक्तं ते प्रकृतं शृणु कुम्भज ।।८६।।
यः कीर्तयेत्सकृद्भक्त्या दिव्यं नाम्नां शतत्रयम् ।
तस्य पुण्यफलं वक्ष्ये विस्तरेण घटोद्भवः ।।८७।।
रहस्यनामसाहस्रपाठे यत्फलमीरितम् ।
तत्कोटिकोटिगुणितमेकनामजपाद् भवेत् ।।८८।।
कामेश्वराभ्यां तदिदं कृतं नामशतत्रयम् ।
नान्येन तुलयेदेतत्स्तोत्रेणान्यकृतेन तु ।।८९।।
श्रियः परंपरा यस्य भाविनी तूत्तरोत्तरम् ।
तेनैव लभ्यते नाम्नां त्रिशती सर्वकामदा ।।९०।।
अस्या नाम्नां त्रिशत्यास्तु महिमा केन वर्ण्यते ।
या स्वयं शिवयोर्वक्त्रपद्माभ्यां परिनिस्सृता ।।९१।।
नित्या षोडशिकारूपान्विप्रानादौ तु भोजयेत् ।
अभ्यक्तान् गन्धतैलेन स्नातानुष्णेन वारिणा ।।९२।।

अभ्यर्च्य वस्त्रगन्धाद्यैः कामेश्वर्यादिनामभिः ।
सूपापूपैः शर्कराद्यैः पायसैः फलसंयुतैः ।।९३।।
विद्याविदो विशेषेण भोजयेत्षोडश द्विजान् ।
एवं नित्यबलिं कुर्यादादौ ब्राह्मणभोजने ।।९४।।
पश्चात्रिशत्या नाम्नां तु ब्राह्मणान् क्रमशोऽर्चयेत् ।
तैलाभ्यंगादिकं दद्याद्विभवे सति भक्तितः ।।९५।।
शुक्लप्रतिपदारभ्य पौर्णमास्यवधिः क्रमात् ।
दिवसे दिवसे विप्रा भोज्या विंशतिसंख्यया ।।९६।।
दशभिः पञ्चभिर्वापि त्रिभिरेकेन वा दिनैः ।
त्रिंशत्षष्टिं शतं विप्रान् भोजयेत् त्रिशतं क्रमात् ।।९७।।
एवं यः कुरुते भक्त्या जन्ममध्ये सकृन्नरः ।
तस्यैववं सफलं जन्म मुक्तिस्तस्य करे स्थिता ।।९८।।
रहस्यनामसाहस्त्रैरर्चनेप्येववमेव हि ।
आदौ नित्यबलिं कुर्यात् पश्चाद् ब्राह्मणभोजनम् ।।९९।।
रहस्यनामसाहस्त्रमहिमा यो मयोदितः ।
स शीकराणुरत्रैकनाम्नो महिमवारिधेः ।।१००।।
वाग्देवीरचिते नामसाहस्त्रे यद्यदीरितम् ।
तत्तत्फलमवाप्नोति नाम्नोऽप्येकस्य कीर्तनात् ।।१०१।।
एतदन्यैर्जपैस्स्तोत्रेरर्चनैर्यत्फलं भवेत् ।
तत्फलं कोटिगुणितं भवेन्नामशतत्रयात् ।।१०२।।
रहस्यनामसाहस्त्रकोट्यावृत्यास्तु यत्फलम् ।
तद्भवेत्कोटिगुणितं नामत्रिशतकीर्तनात् ।।१०३।।

वाग्देवीरचिते स्तोत्रे तादृशो महिमा यदि ।
साक्षात्कामेशकामेशीकृतेऽस्मिन् गृह्यतामिति ।।१०४।।
सकृत्सङ्कीर्तनादेव नाम्नामस्मिन् शतत्रये ।
भवेच्चित्तस्य पर्याप्तिर्नूनमन्यानपेक्षिणी ।।१०५।।
न ज्ञातव्यमितोप्यन्यन् न जप्तव्यं च कुम्भज ।
यदसाध्यतमं कार्यं तत्तदर्थमिदं जपेत् ।।१०६।।
तत्तत्सिद्धिमवाप्नोति पश्चात्कार्यं परीक्षयेत् ।
ये ये प्रयोगास्तन्त्रेषु तैस्तैर्यत्साध्यते ध्रुवम् ।।१०७।।
तत्सर्वं सिद्ध्यति क्षिप्रं नामत्रिशतकीर्तनात् ।
आयुष्करं पुष्टिकरं पुत्रदं वश्यकारकम् ।।१०८।।
विद्याप्रदं कीर्तिकरं सुकवित्वप्रदायकम् ।
सर्वसम्पत्प्रदं सर्वभोगदं सर्वसौख्यदम् ।।१०९।।
सर्वाभीष्टप्रदं चैव देवीनामशतत्रयम् ।
एतज्जपपरो भूयान्नान्यदिच्छेत्कदाचन ।।११०।।
एतत्कीर्तनसन्तुष्टा श्रीदेवी ललिताम्बिका ।
भक्तस्य यद्यदिष्टं स्यात्तत्तत्पूरयते ध्रुवम् ।।१११।।
तस्मात्कुम्भोद्भवमुने! कीर्तय त्वमिदं सदा ।
अपरं किञ्चिदपि ते बोद्धव्यं नावशिष्यते ।।११२।।
इति ते कथितं स्तोत्रं ललिताप्रीतिदायकम् ।
नाविद्यावेदिने ब्रूयान्नाभक्ताय कदाचन ।।११३।।
न शठाय न दुष्टाय नाविश्वासाय कर्हिचित् ।
यो ब्रूयात् त्रिशतीं नाम्नां तस्यानर्थो महान् भवेत् ।।११४।।

इत्याज्ञा शांकरी प्रोक्ता तस्माद् गोप्यमिदं त्वया ।
ललिताप्रेरितेनैव मयोक्तं स्तोत्रमुत्तमम् ।।११५।।
रहस्यनामसाहस्रादतिगोप्यमिदं मुने ।
एवमुक्त्वा हयग्रीवः कुम्भजं तापसोत्तमम् ।।११६।।
स्तोत्रेणानेन ललितां स्तुत्वा त्रिपुरसुन्दरीम् ।
आनन्दलहरीमग्नमानसस्समवर्तत ।।११७।।

इति श्रीब्रह्माण्डपुराणे श्रीहयग्रीवागस्त्यसंवादे श्रीललितापाख्याने स्तोत्रखण्डे श्रीललितात्रिशतीस्तोत्रं सर्वसम्पूर्तिकरं समाप्तमम् ।।

***

# सौभाग्याष्टोत्तरशतनामस्तोत्रम्

(प्रस्तुत अष्टोत्तरशतनाम भगवती त्रिपुरा के हैं। जैसा कि इसके नाम से ही स्पष्ट है, यह सौभाग्यदायक है। जमदग्नि से प्राप्तकर भगवान् दत्तात्रेय ने परशुराम से कहा है। इसे पूर्व में भगवान् शिव ने पार्वती से भी कहा है। यह स्तोत्र श्रीविद्या समुद्र के रत्न के समान है।)

विनियोगः

ॐ अस्य श्रीसौभाग्याष्टोत्तरशतनामस्तोत्रस्य भार्गवऋषिः, रक्तः शिवः, अनुष्टुप् छन्दः, ललिताम्बिका देवता, पाठे विनियोगः ।

ॐ ऐं ह्रीं श्रीं कामेश्वरी कामशक्तिः कामसौभाग्यदायिनी।
कामरूपा कामकला कामिनी कमलासना ।।१।।
कमला कल्पनाहीना कमनीया कलावती ।
कमला भारती सेव्या कल्पिताशेषसंस्कृतिः ।।२।।
अनुत्तरानघानन्ताद्भुतरूपानलोद्भवा ।
अतिलोकचरित्रातिसुन्दर्यातिशुभप्रदा ।।३।।
अनन्त्यतिविस्तारार्चनतुष्टामितप्रभा ।
एकरूपैकवीरैकनाथा कान्तार्चनप्रिया ।।४।।
एकैकभावतुष्टैकरसैकान्तजनप्रिया ।
एधमानप्रभावैधद्भक्तपातकनाशिनी ।।५।।
एलमोदमुखेनोद्रि शक्रायुधसमस्थितिः ।
ईहाशून्योप्सितेशादिसैव्येशानवरांगना ।।६।।
ईश्वराज्ञापिकेकारभाव्येप्सितफलप्रदा ।
ईशानेति हरे शेषदरुणाक्षीश्वरेश्वरी ।।७।।

ललिता ललनारूपा लयहीना लसत्तनुः ।
लयसर्वा लयक्षाणिः लयकर्त्री लयात्मिका ।।८।।
लघिमा लघुमध्याढ्या ललमाना लघुद्रुता ।
हयारूढा हतामित्रा हरकान्ता हरिस्तुता ।।९।।
हयग्रीवेष्टदा हालप्रिया हर्षसमुद्भवा ।
हर्षणा हल्लकामाङ्गी हस्त्यन्तैश्वर्यदायिनी ।।१०।।
हलहस्तार्चिपदा हविर्दानप्रसादिनी ।
रामा रामार्चिता राज्ञी रम्या रवमयी रतिः ।।११।।
रक्षिणी रमणी राकारमणी मण्डलप्रिया ।
रक्षिताखिललोकेशी रक्षोगणनिषूदिनी ।।१२।।
अन्तान्तकारिण्यम्भोजप्रियान्तक भयङ्करी ।
अम्बुरूपाम्बुजकराम्बुजजातवरप्रदा ।।१३।।
अन्तःपूजाप्रियान्तःस्थरूपिण्यन्तर्वचोमयी ।
अन्तकारातिवामाङ्कस्थितान्तस्सुखरूपिणी ।।१४।।
सर्वज्ञा सर्वगा सारा समा समसुखा सती ।
सन्ततिः सन्तता सोमा सर्वा सांख्या सनातनी ॐ।।१५।।
एतत् ते कथितं देवि! नाम्नामष्टोत्तरं शतम् ।
अतिगोप्यमिदं स्तोत्रं सर्वतो सारमुद्धृतम् ।।१६।।
एतच्छदृशं स्तोत्रं त्रिषु लोकेषु दुर्लभम् ।
अप्रकाश्यमभक्तानां पुरतो देवताद्विषम् ।।१७।।
एतत् सदाशिवो नित्यं पठन्त्यन्ये हरादयः ।
एतत् प्रभावात् कन्दर्पः त्रैलोक्यं जयति क्षणात् ।।१८।।

सौभाग्याष्टोत्तरशतनामस्तोत्रमनोहरम् ।
यस्त्रिसन्ध्यं पठेन्नित्यं न तस्य भुवि दुर्लभम् ।।१९।।
श्रीविद्योपासनवतौ एतदावश्यकं मतम् ।
सकृदेतत् प्रपठतां नान्यकर्म विलुप्यते ।।२०।।
अपठित्वा स्तोत्रमिदं नित्यं नैमित्तिकं कृतम् ।
व्यर्थी भवति तन्नरकृतं कर्म यथा-तथा ।।२१।।
सहस्रनामपाठादौ पठेत् स्तोत्रं शुभप्रदम् ।
सहस्रनामपाठस्य फलं शतगुणं भवेत् ।।२२।।
सहस्रपठनाद् ध्याता वीक्षणान्नाशयेद् रिपून् ।
करवीरैः रक्तपुष्पैर्हुत्वा लोकान् वशं नयेत् ।।२३।।
स्तम्भयेत् पीतकुसुमैर्नीलैरुच्चाटयेद् रिपून् ।
मरीचिर्विद्वेषणाय लवङ्गैर्व्याधिं नश्यते ।।२४।।
पत्रपुष्पैः फलैर्वापि पूजयेत् प्रतिनामभिः ।
चक्रराजेऽथवाऽन्यत्र स वसेच्छ्रीपुरं चिरम् ।।२५।।
यः सदाऽऽवर्तयन् आस्ते नामाष्टशतमुत्तमम् ।
तस्य श्रीललिता माता प्रसन्ना वांछितप्रदा ।।२६।।

।। इति श्रीसौभाग्याष्टोत्तरशतनामस्तोत्रम् ।।

***

# सम्बुद्ध्यन्तखड्गमालास्तोत्रम्

## विनियोगः

अस्य श्रीशुद्धशक्तिसंबुद्ध्यन्तमालामहामन्त्रस्य उपस्थेन्द्रियाधिष्ठायि-वरुणादित्य-ऋषयः, गायत्रीच्छंदः, सात्त्विककाकारभट्टारकपीठस्थितशिव-कामेश्वराङ्कनिलया कामेश्वरी ललिता महाभट्टारिका देवता, ऐं बीजं, क्लीं शक्तिः, सौः कीलकं, खड्गसिद्धौ विनियोगः ।

## ध्यानम्

तादृशं खड्गमाप्नोति येन हस्तस्थितेन वै ।
अष्टादशमहाद्वीपसम्राड्भोक्ता भविष्यति ।।
आरक्ताभां त्रिणेत्रामरुणिमवसनां रत्नताटङ्करम्यां
हस्ताम्भोजैस्सपाशांकुशमदनधनुस्सायकैर्विस्फुरन्तीम् ।
आपीनोत्तुङ्गवक्षोरुहकलशलुठत्तारहारोज्वलाङ्गीं
ध्यायेदम्भोरुहस्थामरुणिमवसनामीश्वरीमीश्वराणाम् ।।
पद्मरागप्रतीकाशां त्रिनेत्रां चन्द्रशेखराम् ।
नवरत्नलसद्भूषां भूषितां पादमस्तकाम् ।।
पाशाङ्कुशौ पुष्पशरान्दधतीं पुण्ड्रचापकम् ।
पूर्णतारुण्यलावण्यतरङ्गितकलेवराम् ।।
स्वसमानाकारवेषकामेशाश्लेषसुन्दराम्
ध्यात्वैवं मानसैर्देवीमाराध्य प्रपठेत्ततः ।।

## लमित्यादि पञ्चपूजा

लं पृथिवीतत्त्वात्मिकायै श्रीललितादेव्यै गन्धं परिकल्पयामि।
हं आकाशतत्त्वात्मिकायै श्रीललितादेव्यै पुष्पं परिकल्पयामि।
यं वायुतत्त्वात्मिकायै श्रीललितादेव्यै धूपं परिकल्पयामि ।
रं वह्नितत्त्वात्मिकायै श्रीललितादेव्यै दीपं परिकल्पयामि ।

वं अमृततत्त्वात्मिकायै श्रीललितादेव्यै अमृतनैवेद्यं परिकल्पयामि। सं सर्वतत्त्वात्मिकायै श्रीललितादेव्यै ताम्बूलादिसर्वोपचारान् परिकल्पयामि ।

## अथ स्तोत्रम्

ऐं ह्रीं श्रीं ओं नमस्त्रिपुरसुन्दरि हृदयदेवि शिरोदेवि शिखादेवि कवचदेवि नेत्रदेव्यस्त्रदेवि कामेश्वरि भगमालिनि नित्यक्लिन्ने भेरुण्डे वह्निवासिनि महावज्रेश्वरि शिवादूति त्वरिते कुलसुन्दरि नित्ये नीलपताके विजये सर्वमंगले ज्वालामालिनि चित्रे महानित्ये परमेश्वरपरमेश्वरि मित्रीशमयि षष्ठीशमय्युड्डीशमयि चर्यानाथमयि लोपामुद्रामय्यगस्त्यमयि कालतापनमयि धर्माचारमयि मुक्तकेशीश्वर-मयि दीपकलानाथमयि विष्णुदेवमयि प्रभाकरदेवमयि तेजोदेवमयि मनोजदेवमयि कल्याणदेवमयि रत्नदेवमयि वासुदेवमयि श्रीरामानन्द-मय्यणिमासिद्धे लघिमासिद्धे महिमासिद्धे गरिमासिद्धे ईशित्वसिद्धे वशित्वसिद्धे प्राकाम्यसिद्धे भुक्तिसिद्धे इच्छौसिद्धे प्राप्तिसिद्धे सर्वकामसिद्धे ब्राह्मि माहेश्वरि कौमारि वैष्णवि वाराहि माहेन्द्रि चामुण्डे महालक्ष्मि सर्वसंक्षोभिणि सर्वविद्राविणि सर्वाकर्षिणि सर्व-वशंकरि सर्वोन्मादिनि सर्वमहाङ्कुशे सर्वखेचरि सर्वबीजे सर्वयोने सर्वत्रिखण्डे त्रैलोक्यमोहनचक्रस्वामिनि प्रकटयोगिनि कामा-कर्षिणि बुद्ध्याकर्षिणि अहंकाराकर्षिणि शब्दाकर्षिणि स्पर्शा-कर्षिणि रूपाकर्षिणि रसाकर्षिणि गन्धाकर्षिणि चित्ताकर्षिणि धैर्याकर्षिणि स्मृत्याकर्षिणि नामाकर्षिणि बीजाकर्षिण्यात्माकर्षिण्यमृताकर्षिणि शरीराकर्षिणि सर्वाशापरिपूरकचक्रस्वामिनि गुप्तयोगिन्यनङ्ग-कुसुमेऽनङ्गमेखलेऽनङ्गमदनेऽनङ्गमदनातुरेऽनङ्गरेखेऽनङ्गवेगिन्यनङ्गा-ङ्कुशेऽनङ्गमालिनि सर्वसंक्षोभणचक्रस्वामिनि गुप्ततरयोगिनि सर्व-संक्षोभिणि सर्वविद्राविणि सर्वाकर्षिणि सर्वाह्लादिनि सर्वसंमोहिनि

सर्वस्तम्भिनि सर्वजृम्भिणि सर्ववशङ्करि सर्वरञ्जिनि सर्वोन्मादिनि सर्वार्थसाधिनि सर्वसंपत्तिपूरिणि सर्वमन्त्रमयि सर्वद्वन्द्वक्षयंकरि सर्वसौभाग्यदायकचक्रस्वामिनि सम्प्रदाययोगिनि सर्वसिद्धिप्रदे सर्वसम्पत्प्रदे सर्वप्रियंकरि सर्वमङ्गलकारिणि सर्वकामप्रदे सर्वदुःख-विमोचिनि सर्वमृत्युप्रशमिनि सर्वविघ्ननिवारिणि सर्वाङ्गसुन्दरि सर्वसौभाग्यदायिनि सर्वार्थसाधकचक्रस्वामिनि कुलोत्तीर्णयोगिनि सर्वज्ञे सर्वशक्ते सर्वैश्वर्यप्रदे सर्वज्ञानमयि सर्वव्याधिविनाशिनि सर्वाधारस्वरूपे सर्वपापहरे सर्वानन्दमयि सर्वरक्षास्वरूपिणि सर्वेप्सितप्रदे सर्वरक्षाकरचक्रस्वामिनि निगर्भयोगिनि वशिनि कामेश्वरि मेदिनि विमलेऽरुणे जयिनि सर्वेश्वरि कौलिनि सर्वरोगहरचक्रस्वामिनि रहस्ययोगिनि बाणिनि चापिनि पाशिन्यङ्कुशिनि महाकामेश्वरि महावज्रेश्वरि महाभगमालिनि महाश्रीसुन्दरि सर्वसिद्धिप्रदचक्रस्वामिन्यतिरहस्ययोगिनि श्रीश्रीमहाभट्टारिके सर्वानन्दमयचक्रस्वामिनि परापररहस्ययोगिनि त्रिपुरे त्रिपुरेशि त्रिपुरसुन्दरि त्रिपुरवासिनि त्रिपुराश्रीस्त्रिपुरमालिनि त्रिपुरासिद्धे त्रिपुराम्ब महात्रिपुरसुन्दरि महामहेश्वरि महामहाराज्ञि महामहाशक्ते महामहागुप्ते महामहाज्ञप्ते महामहानन्दे महामहास्पन्दे महामहाशये महामहाश्रीचक्रनगरसाम्राज्ञि नमस्ते नमस्ते नमस्ते स्वाहा श्रीं ह्रीं ऐं ।

एषा विद्यामहासिद्धिदायिनी स्मृतिमात्रतः ।<br>
अग्निवातमहाक्षोभे राजा राष्ट्रस्य विप्लवे ।।१।।<br>
लुंठने तस्करभये सग्रामे सलिलप्लवे ।<br>
समुद्रयानविक्षोभे भूतप्रेतादिके भये ।।२।।<br>
अपस्मारज्वरव्याधिमृत्युक्षामादिजे भये ।<br>
शाकिनीपूतनायक्षरक्षः कूष्माण्डजे भये ।।३।।

मित्रभेदे ग्रहभये व्यसनेष्वभिचारिके ।
अन्येष्वपि च दोषेषु मालामन्त्रं स्मरेन्नरः ।।४।।
सर्वोपद्रवनिर्मुक्तः साक्षाच्छिवमयो भवेत् ।
आपत्काले नित्यपूजां विस्तरात् कर्तुमारभेत् ।।५।।
एकवारं जपध्यानं सर्वपूजाफलं लभेत् ।
नवावरणदेवीनां ललितायां महौजसः ।।६।।
एकत्र गणनारूपो वेदवेदाङ्गगोचरः ।
सर्वागमरहस्यार्थः स्मरणात् पापनाशिनी ।।७।।
ललिताया महेशान्या मालाविद्या महीयसी ।
नरवश्यं नरेन्द्राणां वश्यं नारीवशंकरम् ।।८।।
अणिमादिगुणैश्वर्यं रञ्जनं पापभञ्जनम् ।
तत्तदावरणस्थायि देवतावृन्दमन्त्रकम् ।।९।।
मालामन्त्रं परं गुह्यं परं धाम प्रकीर्तितम् ।
तत्तदावरणस्थायि देवतावृन्दमंत्रकम् ।।१०।।
शक्तिमाला पञ्चधा स्याच्छिवमाला च तादृशी ।
तस्माद्गोप्यतराद्गोप्यं रहस्यं भुक्तिमुक्तिदम् ।।११।।

।। इति देवीखड्गमालास्तोत्रम् ।।

***

# श्रीललितासहस्रनामावलिः

**विनियोगः** - ॐ अस्य श्रीललितासहस्रनामावलिमन्त्रस्य वशिन्यादिवाग्देवताऋषयः। अनुष्टुप् छन्दः। श्रीललिताम्बादेवता। कएईलह्रीं बीजम्। सकलह्रीं शक्तिः। हसकहलह्रीं कीलकम् । श्रीललिताऽम्बाप्रीत्यर्थे जपे विनियोगः ।

(ऐमित्यादिभिरङ्गन्यासकरन्यासाः कार्याः)

।। श्री ललिता ध्यानम् ।।

**सिन्दूरारुण-विग्रहां त्रिनयनां माणिक्य-मौलि-स्फुरत्-**
**तारा-नायक-शेखरां स्मित-मुखीम् आपीन-वक्षोरुहाम् ।**
**पाणिभ्याम् अलि-पूर्ण-रत्न-चषकं रक्तोत्पलं बिभ्रतीं**
**सौम्यां रत्न घटस्थरक्तचरणां ध्यायेत् पराम् अम्बिकाम् ।।**
**अरुणां करुणातरङ्गिताक्षीं धृतपाशांकुशपुष्पबाणचापाम् ।**
**अणिमादिभिरावृतां मयूखैरहमित्येव विभावये भवानीम् ।।**
**सकुङ्कुमविलेपनामळिचुम्बिकस्तूरिकां**
**समन्दहसितेक्षणां सशरचापपाशांकुशाम् ।**
**अशेषजनमोहिनीमरुणमाल्यभूषाम्बरां**
**जपाकुसुमभासुरां जपविधौ स्मरेदम्बिकाम् ।।**

लमित्यादिपञ्चपूजां कुर्यात्

'लं' पृथिवीतत्त्वात्मिकायै श्रीललितादेव्यै गन्धं परिकल्पयामि
'हं' आकाशतत्त्वात्मिकायै श्रीललितादेव्यै पुष्पं परिकल्पयामि
'यं' वायुतत्त्वात्मिकायै श्रीललितादेव्यै धूपं परिकल्पयामि
'रं' वह्नितत्त्वात्मिकायै श्रीललितादेव्यै गन्धं परिकल्पयामि
'वं' अमृततत्त्वात्मिकायै श्रीललितादेव्यै अमृतनैवेद्यं परिकल्पयामि
'सं' सर्वतत्त्वात्मिकायै श्रीललितादेव्यै ताम्बूलादि सर्वोपचारान् परिकल्पयामि

१ ॐ ऐं ह्रीं श्रीं श्रीमात्रे नमः ।
२ ॐ ऐं ह्रीं श्रीं श्रीमहाराज्ञ्यै नमः ।
३ ॐ ऐं ह्रीं श्रीं श्रीमत्सिंहासनेश्वर्यै नमः।
४ ॐ ऐं ह्रीं श्रीं चिदग्निकुण्डसम्भूतायै नमः।
५ ॐ ऐं ह्रीं श्रीं देवकार्यसमुद्यतायै नमः।
६ ॐ ऐं ह्रीं श्रीं उद्यद्भानुसहस्राभायै नमः।
७ ॐ ऐं ह्रीं श्रीं चतुर्बाहुसमन्वितायै नमः।
८ ॐ ऐं ह्रीं श्रीं रागस्वरूपपाशाढ्यायै नमः।
९ ॐ ऐं ह्रीं श्रीं क्रोधाकाराङ्कुशोज्ज्वलायै नमः।
१० ॐ ऐं ह्रीं श्रीं मनोरूपेक्षुकोदण्डायै नमः।
११ ॐ ऐं ह्रीं श्रीं पञ्चतन्मात्रसायकायै नमः।
१२ ॐ ऐं ह्रीं श्रीं निजारुणप्रभापूरमज्जद्ब्रह्माण्डमण्डलायै नमः।
१३ ॐ ऐं ह्रीं श्रीं चम्पकाशोकपुन्नागसौगन्धिकलसत्कचायै नमः।
१४ ॐ ऐं ह्रीं श्रीं कुरुविन्दमणिश्रेणीकनत्कोटिरमण्डितायै नमः।
१५ ॐ ऐं ह्रीं श्रीं अष्टमीचन्द्रविभ्राजदलिकस्थलशोभितायै नमः।
१६ ॐ ऐं ह्रीं श्रीं मुखचन्द्रकलङ्काभमृगनाभिविशेषकायै नमः ।
१७ ॐ ऐं ह्रीं श्रीं वदनस्मरमाङ्गल्यगृहतोरणचिल्लिकायै नमः ।
१८ ॐ ऐं ह्रीं श्रीं वक्त्रलक्ष्मीपरीवाहचलन्मीनाभलोचनायै नमः।
१९ ॐ ऐं ह्रीं श्रीं नवचम्पकपुष्पाभनासादण्डविराजितायै नमः ।
२० ॐ ऐं ह्रीं श्रीं ताराकान्तितिरस्कारिनासाभरणभासुरायै नमः।
२१ ॐ ऐं ह्रीं श्रीं कदम्बमञ्जरीक्लृप्तकर्णपूरमनोहरायै नमः ।
२२ ॐ ऐं ह्रीं श्रीं ताटङ्कयुगलीभूततपनोडुपमण्डलायै नमः ।
२३ ॐ ऐं ह्रीं श्रीं पद्मरागशिलादर्शपरिभाविकपोलभुवे नमः ।
२४ ॐ ऐं ह्रीं श्रीं नवविद्रुमविम्बश्रीन्यक्कारिदशनच्छदायै नमः।
२५ ॐ ऐं ह्रीं श्रीं शुद्धविद्याङ्कुराकारद्विजपङ्क्तिद्वयोज्ज्वलायै नमः।
२६ ॐ ऐं ह्रीं श्रीं कर्पूरवीटिकामोदसमाकर्षिदिगन्तरायै नमः ।
२७ ॐ ऐं ह्रीं श्रीं निजसंल्लापमाधुर्यविनिर्भर्सितकच्छप्यै नमः ।
२८ ॐ ऐं ह्रीं श्रीं मन्दस्मितप्रभापूरमज्जत्कामेश मानसायै नमः।
२९ ॐ ऐं ह्रीं श्रीं अनाकलितसादृश्यचिबुकश्रीविराजितायै नमः।
३० ॐ ऐं ह्रीं श्रीं कामेशबद्धमाङ्गल्यसूत्रशोभितकन्धरायै नमः ।
३१ ॐ ऐं ह्रीं श्रीं कनकाङ्गदकेयूरकमनीयभुजान्वितायै नमः ।
३२ ॐ ऐं ह्रीं श्रीं रत्नग्रैवेयचिन्ताकलोमुक्ताफलान्वितायै नमः ।

३३ ॐ ऐं ह्रीं श्रीं कामेश्वरप्रेमरत्नमणिप्रतिपणस्तन्यै नमः ।
३४ ॐ ऐं ह्रीं श्रीं नाभ्यालवालरोमालिलताफलकुचद्वय्यै नमः ।
३५ ॐ ऐं ह्रीं श्रीं लक्ष्यरोमलताधारतासमुन्नेयमध्यमायै नमः ।
३६ ॐ ऐं ह्रीं श्रीं स्तनभारदलन्मध्यपट्टबन्धवलित्रयायै नमः ।
३७ ॐ ऐं ह्रीं श्रीं अरुणारुणकौसुम्भवस्त्रभास्वत्कटीतट्यै नमः।
३८ ॐ ऐं ह्रीं श्रीं रत्नकिङ्किणिकारम्यरशनादामभूषितायै नमः ।
३९ ॐ ऐं ह्रीं श्रीं कामेशज्ञातसौभाग्यमार्दवोरुद्वयान्वितायै नमः।
४० ॐ ऐं ह्रीं श्रीं माणिक्यमुकुटाकारजानुद्वयविराजितायै नमः ।
४१ ॐ ऐं ह्रीं श्रीं इन्द्रगोपपरिक्षिप्तस्मरतूणाभजङ्घिकायै नमः ।
४२ ॐ ऐं ह्रीं श्रीं गूढगुल्फायै नमः ।
४३ ॐ ऐं ह्रीं श्रीं कूर्मपृष्ठजयिष्णुप्रपदान्वितायै नमः ।
४४ ॐ ऐं ह्रीं श्रीं नखदीधितिसञ्छन्ननमज्जनतमोगुणायै नमः ।
४५ ॐ ऐं ह्रीं श्रीं पदद्वयप्रभाजालपराकृतसरोरुहायै नमः ।
४६ ॐ ऐं ह्रीं श्रीं शिञ्जानमणिमञ्जीरमण्डितश्रीपदाम्बुजायै नमः।

४७ ॐ ऐं ह्रीं श्रीं मरालीमन्दगमनायै नमः।
४८ ॐ ऐं ह्रीं श्रीं महालावण्यशेवधये नमः।
४९ ॐ ऐं ह्रीं श्रीं सर्वारुणायै नमः ।
५० ॐ ऐं ह्रीं श्रीं अनवद्याङ्ग्यै नमः ।
५१ ॐ ऐं ह्रीं श्रीं सर्वाभरणभूषितायै नमः।
५२ ॐ ऐं ह्रीं श्रीं शिवकामेश्वराङ्कस्थायै नमः।
५३ ॐ ऐं ह्रीं श्रीं शिवायै नमः ।
५४ ॐ ऐं ह्रीं श्रीं स्वाधीनवल्लभायै नमः।
५५ ॐ ऐं ह्रीं श्रीं सुमेरुशृङ्गमध्यस्थायै नमः ।
५६ ॐ ऐं ह्रीं श्रीं श्रीमन्नगरनायिकायै नमः।
५७ ॐ ऐं ह्रीं श्रीं चिन्तामणिगृहान्तस्थायै नमः ।
५८ ॐ ऐं ह्रीं श्रीं पञ्चब्रह्मासनस्थितायै नमः।
५९ ॐ ऐं ह्रीं श्रीं महापद्माटवीसंस्थायै नमः।
६० ॐ ऐं ह्रीं श्रीं कदम्बवनवासिन्यै नमः।
६१ ॐ ऐं ह्रीं श्रीं सुधासागरमध्यस्थायै नमः।
६२ ॐ ऐं ह्रीं श्रीं कामाक्ष्यै नमः ।
६३ ॐ ऐं ह्रीं श्रीं कामदायिन्यै नमः ।

६४ ॐ ऐं ह्रीं श्रीं देवर्षिगणसङ्घातस्तूयमानात्मवैभवायै नमः ।
६५ ॐ ऐं ह्रीं श्रीं भण्डासुरवधोद्युक्तशक्तिसेनासमन्वितायै नमः ।
६६ ॐ ऐं ह्रीं श्रीं सम्पत्करीसमारूढसिन्धुरव्रजसेवितायै नमः ।
६७ ॐ ऐं ह्रीं श्रीं अश्वारूढाधिष्ठिताश्वकोटिकोटिभिरावृतायै नमः।
६८ ॐ ऐं ह्रीं श्रीं चक्रराजरथारूढसर्वायुधपरिष्कृतायै नमः ।
६९ ॐ ऐं ह्रीं श्रीं गेयचक्ररथारूढमन्त्रिणीपरिसेवितायै नमः ।
७० ॐ ऐं ह्रीं श्रीं किरिचक्ररथारूढमन्त्रिणीपरिसेवितायै नमः ।

७१ ॐ ऐं ह्रीं श्रीं ज्वालामालिनिकाक्षिप्तवह्निप्राकारमध्यगायै नमः।
७२ ॐ ऐं ह्रीं श्रीं भण्डसैन्यवधोद्युक्तशक्तिविक्रमहर्षितायै नमः ।
७३ ॐ ऐं ह्रीं श्रीं नित्यापराक्रमाटोपनिरीक्षणसमुत्सुकायै नमः ।
७४ ॐ ऐं ह्रीं श्रीं भण्डपुत्रवधोद्युक्तबालाविक्रमनन्दितायै नमः ।
७५ ॐ ऐं ह्रीं श्रीं मन्त्रिण्यम्बाविरचितविषङ्गवधतोषितायै नमः ।
७६ ॐ ऐं ह्रीं श्रीं विशुक्रप्राणहरणवाराहीवीर्यनन्दितायै नमः ।
७७ ॐ ऐं ह्रीं श्रीं कामेश्वरमुखालोककल्पितश्रीगणेश्वरायै नमः ।
७८ ॐ ऐं ह्रीं श्रीं महागणेशनिर्भिन्नविघ्नयन्त्रप्रहर्षितायै नमः ।
७९ ॐ ऐं ह्रीं श्रीं भण्डासुरेन्द्रनिर्मुक्तशस्त्रप्रत्यस्त्रवर्षिण्यै नमः ।
८० ॐ ऐं ह्रीं श्रीं कराङ्गुलिनखोत्पन्ननारायणदशाकृत्यै नमः ।
८१ ॐ ऐं ह्रीं श्रीं महापाशुपतास्त्राग्निनिर्दग्धासुरसैनिकायै नमः।
८२ ॐ ऐं ह्रीं श्रीं कामेश्वरास्त्रनिर्दग्धसभण्डासुरशून्यकायै नमः ।
८३ ॐ ऐं ह्रीं श्रीं ब्रह्मोपेन्द्रमहेन्द्रादिदेवसंस्तुतवैभवायै नमः ।
८४ ॐ ऐं ह्रीं श्रीं हरनेत्राग्निसन्दग्धकामसञ्जीवनौषध्यै नमः ।
८५ ॐ ऐं ह्रीं श्रीं श्रीमद्वाग्भवकूटैकस्वरूपमुखपङ्कजायै नमः ।
८६ ॐ ऐं ह्रीं श्रीं कण्ठाधःकटिपर्यन्तमध्यकूटस्वरूपिण्यै नमः।
८७ ॐ ऐं ह्रीं श्रीं शक्तिकूटैकतापन्नकट्यधोभागधारिण्यै नमः ।

८८ ॐ ऐं ह्रीं श्रीं मूलमन्त्रात्मिकायै नमः।
८९ ॐ ऐं ह्रीं श्रीं मूलकूटत्रयकलेवरायै नमः।
९० ॐ ऐं ह्रीं श्रीं कुलामृतैकरसिकायै नमः।
९१ ॐ ऐं ह्रीं श्रीं कुलसङ्केतपालिन्यै नमः।
९२ ॐ ऐं ह्रीं श्रीं कुलाङ्गनायै नमः ।
९३ ॐ ऐं ह्रीं श्रीं कुलान्तस्थायै नमः ।
९४ ॐ ऐं ह्रीं श्रीं कौलिन्यै नमः ।
९५ ॐ ऐं ह्रीं श्रीं कुलयोगिन्यै नमः ।
९६ ॐ ऐं ह्रीं श्रीं अकुलायै नमः ।
९७ ॐ ऐं ह्रीं श्रीं समयान्तस्थायै नमः ।
९८ ॐ ऐं ह्रीं श्रीं समयाचारतत्परायै नमः।
९९ ॐ ऐं ह्रीं श्रीं मूलाधारैकनिलयायै नमः।
१०० ॐ ऐं ह्रीं श्रीं ब्रह्मग्रन्थिविभेदिन्यै नमः।

१०१ ॐ ऐं ह्रीं श्रीं मणिपूरान्तरुदितायै नमः।
१०२ ॐ ऐं ह्रीं श्रीं विष्णुग्रन्थिविभेदिन्यै नमः।
१०३ ॐ ऐं ह्रीं श्रीं आज्ञाचक्रान्तरालस्थायै नमः।
१०४ ॐ ऐं ह्रीं श्रीं रुद्रग्रन्थिविभेदिन्यै नमः।
१०५ ॐ ऐं ह्रीं श्रीं सहस्राराम्बुजारूढायै नमः।
१०६ ॐ ऐं ह्रीं श्रीं सुधासाराभिवर्षिण्यै नमः।
१०७ ॐ ऐं ह्रीं श्रीं तडिल्लतासमरुच्यै नमः।
१०८ ॐ ऐं ह्रीं श्रीं षट्चक्रोपरिसंस्थितायै नमः।
१०९ ॐ ऐं ह्रीं श्रीं महासक्त्यै नमः ।
११० ॐ ऐं ह्रीं श्रीं कुण्डलिन्यै नमः ।
१११ ॐ ऐं ह्रीं श्रीं विसतन्तुतनीयस्यै नमः।
११२ ॐ ऐं ह्रीं श्रीं भवान्यै नमः ।
११३ ॐ ऐं ह्रीं श्रीं भावनागम्यायै नमः ।

११४ ॐ ऐं ह्रीं श्रीं भवारण्यकुठारिकायै नमः।
११५ ॐ ऐं ह्रीं श्रीं भद्रप्रियायै नमः ।
११६ ॐ ऐं ह्रीं श्रीं भद्रमूर्तये नमः ।
११७ ॐ ऐं ह्रीं श्रीं भक्तसौभाग्यदायिन्यै नमः।
११८ ॐ ऐं ह्रीं श्रीं भक्तिप्रियायै नमः ।
११९ ॐ ऐं ह्रीं श्रीं भक्तिगम्यायै नमः ।
१२० ॐ ऐं ह्रीं श्रीं भक्तिवश्यायै नमः ।
१२१ ॐ ऐं ह्रीं श्रीं भयापहायै नमः ।
१२२ ॐ ऐं ह्रीं श्रीं शाम्भव्यै नमः ।
१२३ ॐ ऐं ह्रीं श्रीं शारदाराध्यायै नमः।
१२४ ॐ ऐं ह्रीं श्रीं शर्वाण्यै नमः।
१२५ ॐ ऐं ह्रीं श्रीं शर्मदायिन्यै नमः ।
१२६ ॐ ऐं ह्रीं श्रीं शाङ्कर्यै नमः ।
१२७ ॐ ऐं ह्रीं श्रीं श्रीकर्यै नमः।
१२८ ॐ ऐं ह्रीं श्रीं साध्व्यै नमः।
१२९ ॐ ऐं ह्रीं श्रीं शरच्चन्द्रनिभाननायै नमः।
१३० ॐ ऐं ह्रीं श्रीं शातोदर्यै नमः ।
१३१ ॐ ऐं ह्रीं श्रीं शान्तिमत्यै नमः ।
१३२ ॐ ऐं ह्रीं श्रीं निराधारायै नमः ।
१३३ ॐ ऐं ह्रीं श्रीं निरञ्जनायै नमः ।
१३४ ॐ ऐं ह्रीं श्रीं निर्लेपायै नमः ।
१३५ ॐ ऐं ह्रीं श्रीं निर्मलायै नमः ।
१३६ ॐ ऐं ह्रीं श्रीं नित्यायै नमः ।
१३७ ॐ ऐं ह्रीं श्रीं निराकारायै नमः ।
१३८ ॐ ऐं ह्रीं श्रीं निराकुलायै नमः ।
१३९ ॐ ऐं ह्रीं श्रीं निर्गुणायै नमः ।
१४० ॐ ऐं ह्रीं श्रीं निष्कलायै नमः ।
१४१ ॐ ऐं ह्रीं श्रीं शान्तायै नमः ।
१४२ ॐ ऐं ह्रीं श्रीं निष्कामायै नमः ।
१४३ ॐ ऐं ह्रीं श्रीं निरुपप्लवायै नमः।
१४४ ॐ ऐं ह्रीं श्रीं नित्यमुक्तायै नमः ।
१४५ ॐ ऐं ह्रीं श्रीं निर्विकारायै नमः।
१४६ ॐ ऐं ह्रीं श्रीं निष्प्रपञ्चायै नमः ।
१४७ ॐ ऐं ह्रीं श्रीं निराश्रयायै नमः ।
१४८ ॐ ऐं ह्रीं श्रीं नित्यशुद्धायै नमः।
१४९ ॐ ऐं ह्रीं श्रीं नित्यबुद्धायै नमः ।
१५० ॐ ऐं ह्रीं श्रीं निरवद्यायै नमः ।
१५१ ॐ ऐं ह्रीं श्रीं निरन्तरायै नमः ।
१५२ ॐ ऐं ह्रीं श्रीं निष्कारणायै नमः ।
१५३ ॐ ऐे ह्रीं श्रीं निष्कलङ्कायै नमः।
१५४ ॐ ऐं ह्रीं श्रीं निरुपाधये नमः ।
१५५ ॐ ऐं ह्रीं श्रीं निरीश्वरायै नमः ।
१५६ ॐ ऐं ह्रीं श्रीं नीरागायै नमः ।
१५७ ॐ ऐं ह्रीं श्रीं रागमथनायै नमः ।
१५८ ॐ ऐं ह्रीं श्रीं निर्मदायै नमः ।
१५९ ॐ ऐं ह्रीं श्रीं मदनाशिन्यै नमः ।
१६० ॐ ऐं ह्रीं श्रीं निश्चिन्तायै नमः ।
१६१ ॐ ऐं ह्रीं श्रीं निरहङ्कारायै नमः ।
१६२ ॐ ऐं ह्रीं श्रीं निर्मोहायै नमः ।
१६३ ॐ ऐं ह्रीं श्रीं मोहनाशिन्यै नमः ।
१६४ ॐ ऐं ह्रीं श्रीं निर्ममायै नमः ।
१६५ ॐ ऐं ह्रीं श्रीं ममताहन्त्र्यै नमः ।
१६६ ॐ ऐं ह्रीं श्रीं निष्पापायै नमः ।
१६७ ॐ ऐं ह्रीं श्रीं पापनाशिन्यै नमः ।
१६८ ॐ ऐं ह्रीं श्रीं निष्क्रोधायै नमः ।
१६९ ॐ ऐं ह्रीं श्रीं क्रोधशमन्यै नमः ।
१७० ॐ ऐं ह्रीं श्रीं निर्लोभायै नमः ।
१७१ ॐ ऐं ह्री श्रीं लोभनाशिन्यै नमः।
१७२ ॐ ऐं ह्रीं श्रीं निःसंशयायै नमः ।
१७३ ॐ ऐं ह्रीं श्रीं संशयघ्न्यै नमः ।

१७४ ॐ ऐं ह्रीं श्रीं निर्भवायै नमः ।
१७५ ॐ ऐं ह्रीं श्रीं भवनाशिन्यै नमः ।
१७६ ॐ ऐं ह्रीं श्रीं निर्विकल्पायै नमः ।
१७७ ॐ ऐं ह्रीं श्रीं निराबाधायै नमः ।
१७८ ॐ ऐं ह्रीं श्रीं निर्भेदायै नमः ।
१७९ ॐ ऐं ह्रीं श्रीं भेदनाशिन्यै नमः ।
१८० ॐ ऐं ह्रीं श्रीं निर्नाशायै नमः ।
१८१ ॐ ऐं ह्रीं श्रीं मृत्युमथन्यै नमः ।
१८२ ॐ ऐं ह्रीं श्रीं निष्क्रियायै नमः ।
१८३ ॐ ऐं ह्रीं श्रीं निष्परिग्रहायै नमः ।
१८४ ॐ ऐं ह्रीं श्रीं निस्तुलायै नमः ।
१८५ ॐ ऐं ह्रीं श्रीं नीलचिकुरायै नमः।
१८६ ॐ ऐं ह्रीं श्रीं निरपायायै नमः ।
१८७ ॐ ऐं ह्रीं श्रीं निरत्ययायै नमः ।
१८८ ॐ ऐं ह्रीं श्रीं दुर्लभायै नमः ।
१८९ ॐ ऐं ह्रीं श्रीं दुर्गमायै नमः ।
१९० ॐ ऐं ह्रीं श्रीं दुर्गायै नमः ।
१९१ ॐ ऐं ह्रीं श्रीं दुःखहन्त्र्यै नमः ।
१९२ ॐ ऐं ह्रीं श्रीं सुखप्रदायै नमः ।
१९३ ॐ ऐं ह्रीं श्रीं दुष्टदूरायै नमः ।
१९४ ॐ ऐं ह्रीं श्रीं दुराचारशमन्यै नमः।
१९५ ॐ ऐं ह्रीं श्रीं दोषवर्जितायै नमः।
१९६ ॐ ऐं ह्रीं श्रीं सर्वज्ञायै नमः ।
१९७ ॐ ऐं ह्रीं श्रीं सान्द्रकरुणायै नमः।
१९८ ॐ ऐं ह्रीं श्रीं समानाधिकवर्जितायै नमः।
१९९ ॐ ऐं ह्रीं श्रीं सर्वशक्तिमय्यै नमः।
२०० ॐ ऐं ह्रीं श्रीं सर्वमङ्गलायै नमः ।
२०१ ॐ ऐं ह्रीं श्रीं सद्गतिप्रदायै नमः ।
२०२ ॐ ऐं ह्रीं श्रीं सर्वेश्वर्यै नमः ।
२०३ ॐ ऐं ह्रीं श्रीं सर्वमय्यै नमः ।
२०४ ॐ ऐं ह्रीं श्रीं सर्वमन्त्रस्वरूपिण्यै नमः।
२०५ ॐ ऐं ह्रीं श्रीं सर्वयन्त्रात्मिकायै नमः।
२०६ ॐ ऐं ह्रीं श्रीं सर्वतन्त्ररूपायै नमः।
२०७ ॐ ऐं ह्रीं श्रीं मनोन्मन्यै नमः ।
२०८ ॐ ऐं ह्रीं श्रीं माहेश्वर्यै नमः ।
२०९ ॐ ऐं ह्रीं श्रीं महादेव्यै नमः ।
२१० ॐ ऐं ह्रीं श्रीं महालक्ष्म्यै नमः ।
२११ ॐ ऐं ह्रीं श्रीं मृडप्रियायै नमः ।
२१२ ॐ ऐं ह्रीं श्रीं महारूपायै नमः ।
२१३ ॐ ऐं ह्रीं श्रीं महापूज्यायै नमः ।
२१४ ॐ ऐं ह्रीं श्रीं महापातकनाशिन्यै नमः।
२१५ ॐ ऐं ह्रीं श्रीं महामायायै नमः ।
२१६ ॐ ऐं ह्रीं श्रीं महासत्त्वायै नमः ।
२१७ ॐ ऐं ह्रीं श्रीं महाशक्त्यै नमः ।
२१८ ॐ ऐं ह्रीं श्रीं महारत्यै नमः ।
२१९ ॐ ऐं ह्रीं श्रीं महाभोगायै नमः ।
२२० ॐ ऐं ह्रीं श्रीं महैश्वर्यायै नमः ।
२२१ ॐ ऐं ह्रीं श्रीं महावीर्यायै नमः ।
२२२ ॐ ऐं ह्रीं श्रीं महाबलायै नमः ।
२२३ ॐ ऐं ह्रीं श्रीं महाबुद्ध्यै नमः ।
२२४ ॐ ऐं ह्रीं श्रीं महासिद्ध्यै नमः ।
२२५ ॐ ऐं ह्रीं श्रीं महायोगीश्वरेश्वर्यै नमः।
२२६ ॐ ऐं ह्रीं श्रीं महातन्त्रायै नमः ।
२२७ ॐ ऐं ह्रीं श्रीं महामन्त्रायै नमः ।
२२८ ॐ ऐं ह्रीं श्रीं महायन्त्रायै नमः ।
२२९ ॐ ऐं ह्रीं श्रीं महासनायै नमः ।
२३० ॐ ऐं ह्रीं श्रीं महायागक्रमाराध्यायै नमः।
२३१ ॐ ऐं ह्रीं श्रीं महाभैरवपूजितायै नमः।

२३३ ॐ ऐं ह्रीं श्रीं महाकामेशमहिष्यै नमः।
२३४ ॐ ऐं ह्रीं श्रीं महात्रिपुरसुन्दर्यै नमः।
२३५ ॐ ऐं ह्रीं श्रीं चतुःषष्ट्युपचाराढ्यायै नमः।
२३६ ॐ ऐं ह्रीं श्रीं चतुःषष्टिकलामय्यै नमः।
२३७ ॐ ऐं ह्रीं श्रीं महाचतुःषष्टिकोटियोगिनीगणसेवितायै नमः।
२३८ ॐ ऐं ह्रीं श्रीं मनुविद्यायै नमः ।
२३९ ॐ ऐं ह्रीं श्रीं चन्द्रविद्यायै नमः ।
२४० ॐ ऐं ह्रीं श्रीं चन्द्रमण्डलमध्यगायै नमः।
२४१ ॐ ऐं ह्रीं श्रीं चारुरूपायै नमः ।
२४२ ॐ ऐं ह्रीं श्रीं चारुहासायै नमः ।
२४३ ॐ ऐं ह्रीं श्रीं चारुचन्द्रकलाधरायै नमः।
२४४ ॐ ऐं ह्रीं श्रीं चराचरजगन्नाथायै नमः।
२४५ ॐ ऐं ह्रीं श्रीं चक्रराजनिकेतनायै नमः।
२४६ ॐ ऐं ह्रीं श्रीं पार्वत्यै नमः ।
२४७ ॐ ऐं ह्रीं श्रीं पद्मनयनायै नमः ।
२४८ ॐ ऐं ह्रीं श्रीं पद्मरागसमप्रभायै नमः।
२४९ ॐ ऐं ह्रीं श्रीं पञ्चप्रेतासनासीनायै नमः।
२५० ॐ ऐं ह्रीं श्रीं पञ्चब्रह्मस्वरूपिण्यै नमः।
२५१ ॐ ऐं ह्रीं श्रीं चिन्मय्यै नमः ।
२५२ ॐ ऐं ह्रीं श्रीं परमानन्दायै नमः ।
२५३ ॐ ऐं ह्रीं श्रीं विज्ञानघनरूपिण्यै नमः।
२५४ ॐ ऐं ह्रीं श्रीं ध्यानध्यातृध्येयरूपायै नमः।
२५५ ॐ ऐं ह्रीं श्रीं धर्माधर्मविवर्जितायै नमः।
२५६ ॐ ऐं ह्रीं श्रीं विश्वरूपायै नमः ।
२५७ ॐ ऐं ह्रीं श्रीं जागरिण्यै नमः ।
२५८ ॐ ऐं ह्रीं श्रीं स्वपन्त्यै नमः ।
२५९ ॐ ऐं ह्रीं श्रीं तैजसात्मिकायै नमः।
२६० ॐ ऐं ह्रीं श्रीं सुप्तायै नमः ।
२६१ ॐ ऐं ह्रीं श्रीं प्राज्ञात्मिकायै नमः।
२६२ ॐ ऐं ह्रीं श्रीं तुर्यायै नमः ।
२६३ ॐ ऐं ह्रीं श्रीं सर्वावस्थाविवर्जितायै नमः।
२६४ ॐ ऐं ह्रीं श्रीं सृष्टिकर्त्र्यै नमः ।
२६५ ॐ ऐं ह्रीं श्रीं ब्रह्मरूपायै नमः ।
२६६ ॐ ऐं ह्रीं श्रीं गोप्त्र्यै नमः ।
२६७ ॐ ऐं ह्रीं श्रीं गोविन्दरूपिण्यै नमः।
२६८ ॐ ऐं ह्रीं श्रीं संहारिण्यै नमः ।
२६९ ॐ ऐं ह्रीं श्रीं रुद्ररूपायै नमः ।
२७० ॐ ऐं ह्रीं श्रीं तिरोधानकर्य्यै नमः।
२७१ ॐ ऐं ह्रीं श्रीं ईश्वर्यै नमः ।
२७२ ॐ ऐं ह्रीं श्रीं सदाशिवायै नमः ।
२७३ ॐ ऐं ह्रीं श्रीं अनुग्रहदायै नमः ।
२७४ ॐ ऐं ह्रीं श्रीं पञ्चकृत्यपरायणायै नमः।
२७५ ॐ ऐं ह्रीं श्रीं भानुमण्डलमध्यस्थायै नमः।
२७६ ॐ ऐं ह्रीं श्रीं भैरव्यै नमः ।
२७७ ॐ ऐं ह्रीं श्रीं भगमालिन्यै नमः ।
२७८ ॐ ऐं ह्रीं श्रीं पद्मासनायै नमः ।
२७९ ॐ ऐं ह्रीं श्रीं भगवत्यै नमः ।
२८० ॐ ऐं ह्रीं श्रीं पद्मनाभसहोदर्यै नमः।
२८१ ॐ ऐं ह्रीं श्रीं उन्मेषनिमिषोत्पन्नविपन्नभुवनावल्यै नमः।
२८२ ॐ ऐं ह्रीं श्रीं सहस्रशीर्षवदनायै नमः।
२८३ ॐ ऐं ह्रीं श्रीं सहस्राक्ष्यै नमः ।
२८४ ॐ ऐं ह्रीं श्रीं सहस्रपादै नमः ।
२८५ ॐ ऐं ह्रीं श्रीं आब्रह्मकीटजनन्यै नमः।
२८६ ॐ ऐं ह्रीं श्रीं वर्णाश्रमविधायिन्यै नमः।
२८७ ॐ ऐं ह्रीं श्रीं निजाज्ञारूपनिगमायै नमः।

२८८ ॐ ऐं ह्रीं श्रीं पुण्यापुण्यफलप्रदायै नमः।
२८९ ॐ ऐं ह्रीं श्रीं श्रुतिसीमन्तसिदूरीकृतपादाब्जधूलिकायै नमः।
२९० ॐ ऐं ह्रीं श्रीं सकलागमसन्दोहशुक्तिसम्पुटमौक्तिकायै नमः।

२९१ ॐ ऐं ह्रीं श्रीं पुरुषार्थप्रदायै नमः।
२९२ ॐ ऐं ह्रीं श्रीं पूर्णायै नमः ।
२९३ ॐ ऐं ह्रीं श्रीं भोगिन्यै नमः ।
२९४ ॐ ऐं ह्रीं श्रीं भुवनेश्वर्यै नमः ।
२९५ ॐ ऐं ह्रीं श्रीं अम्विकायै नमः ।
२९६ ॐ ऐं ह्रीं श्रीं अनादिनिधनायै नमः।
२९७ ॐ ऐं ह्रीं श्रीं हरिब्रह्मेन्द्रसेवितायै नमः।
२९८ ॐ ऐं ह्रीं श्रीं नारायण्यै नमः ।
२९९ ॐ ऐं ह्रीं श्रीं नादरूपायै नमः ।
३०० ॐ ऐं ह्रीं श्रीं नामरूपविवर्जितायै नमः।
३०१ ॐ ऐं ह्रीं श्रीं ह्रींकार्यै नमः ।
३०२ ॐ ऐं ह्रीं श्रीं ह्रीमत्यै नमः ।
३०३ ॐ ऐं ह्रीं श्रीं हृद्यायै नमः ।
३०४ ॐ ऐं ह्रीं श्रीं हेयोपादेयवर्जितायै नमः।
३०५ ॐ ऐं ह्रीं श्रीं राजराजार्चितायै नमः।
३०६ ॐ ऐं ह्रीं श्रीं राज्ञ्यै नमः ।
३०७ ॐ ऐं ह्रीं श्रीं रम्यायै नमः ।
३०८ ॐ ऐं ह्रीं श्रीं राजीवलोचनायै नमः।
३०९ ॐ ऐं ह्रीं श्रीं रञ्जन्यै नमः ।
३१० ॐ ऐं ह्रीं श्रीं रमण्यै नमः ।
३११ ॐ ऐं ह्रीं श्रीं रस्यायै नमः ।
३१२ ॐ ऐं ह्रीं श्रीं रणत्किङ्किणिमेखलायै नमः।
३१३ ॐ ऐं ह्रीं श्रीं रमायै नमः ।
३१४ ॐ ऐं ह्रीं श्रीं राकेन्दुवदनायै नमः।
३१५ ॐ ऐं ह्रीं श्रीं रतिरूपायै नमः ।
३१६ ॐ ऐं ह्रीं श्रीं रतिप्रियायै नमः ।
३१७ ॐ ऐं ह्रीं श्रीं रक्षाकर्य्यै नमः ।
३१८ ॐ ऐं ह्रीं श्रीं राक्षसघ्न्यै नमः ।
३१९ ॐ ऐं ह्रीं श्री रामायै नमः ।
३२० ॐ ऐं ह्रीं श्रीं रमणलम्पटायै नमः।
३२१ ॐ ऐं ह्रीं श्रीं काम्यायै नमः ।
३२२ ॐ ऐं ह्रीं श्रीं कामकलारूपायै नमः।
३२३ ॐ ऐं ह्रीं श्रीं कदम्वकुसुमप्रियायै नमः।
३२४ ॐ ऐं ह्रीं श्रीं कल्याण्यै नमः ।
३२५ ॐ ऐं ह्रीं श्रीं जगतीकन्दायै नमः।
३२६ ॐ ऐं ह्रीं श्री करुणारससागरायै नमः।
३२७ ॐ ऐं ह्रीं श्रीं कलावत्यै नमः ।
३२८ ॐ ऐं ह्रीं श्रीं कलालापायै नमः।
३२९ ॐ ऐं ह्रीं श्रीं कान्तायै नमः ।
३३० ॐ ऐं ह्रीं श्रीं कादम्वरीप्रियायै नमः।
३३१ ॐ ऐं ह्रीं श्रीं वरदायै नमः ।
३३२ ॐ ऐं ह्रीं श्रीं वामनयनायै नमः ।
३३३ ॐ ऐं ह्रीं श्रीं वारुणीमदविह्वलायै नमः।
३३४ ॐ ऐं ह्रीं श्रीं विश्वाधिकायै नमः।
३३५ ॐ ऐं ह्रीं श्रीं वेदवेद्यायै नमः।
३३६ ॐ ऐं ह्रीं श्रीं विन्ध्याचलनिवासिन्यै नमः।
३३७ ॐ ऐं ह्रीं श्रीं विधात्र्यै नमः ।
३३८ ॐ ऐं ह्रीं श्रीं वेदजनन्यै नमः ।
३३९ ॐ ऐं ह्रीं श्रीं विष्णुमायायै नमः ।
३४० ॐ ऐं ह्रीं श्रीं विलासिन्यै नमः ।
३४१ ॐ ऐं ह्रीं श्रीं क्षेत्रस्वरूपायै नमः।
३४२ ॐ ऐं ह्रीं श्रीं क्षेत्रेश्यै नमः ।
३४३ ॐ ऐं ह्रीं श्रीं क्षेत्रक्षेत्रज्ञपालिन्यै नमः।
३४४ ॐ ऐं ह्रीं श्रीं क्षयवृद्धिविनिर्मुक्तायै नमः।

३४५ ॐ ऐं ह्रीं श्रीं क्षेत्रपालसमर्चितायै नमः।
३४६ ॐ ऐं ह्रीं श्रीं विजयायै नमः ।
३४७ ॐ ऐं ह्रीं श्रीं विमलायै नमः ।
३४८ ॐ ऐं ह्रीं श्रीं वन्द्यायै नमः ।
३४९ ॐ ऐं ह्रीं श्रीं वन्दारुजनवत्सलायै नमः।
३५० ॐ ऐं ह्रीं श्रीं वाग्वादिन्यै नमः ।
३५१ ॐ ऐं ह्रीं श्रीं वामकेश्यै नमः ।
३५२ ॐ ऐं ह्रीं श्रीं वह्निमण्डलवासिन्यै नमः।
३५३ ॐ ऐं ह्रीं श्रीं भक्तिमत्कल्पलतिकायै नमः।
३५४ ॐ ऐं ह्रीं श्रीं पशुपाशविमोचिन्यै नमः।
३५५ ॐ ऐं ह्रीं श्रीं संहृताशेषपाखण्डायै नमः।
३५६ ॐ ऐं ह्रीं श्रीं सदाचारप्रवर्तिकायै नमः।
३५७ ॐ ऐं ह्रीं श्रीं तापत्रयाग्निसन्तप्तसमाह्लादनचन्द्रिकायै नमः ।
३५८ ॐ ऐं ह्रीं श्रीं तरुण्यै नमः ।
३५९ ॐ ऐं ह्रीं श्रीं तापसाराध्यायै नमः।
३६० ॐ ऐं ह्रीं श्रीं तनुमध्यायै नमः ।
३६१ ॐ ऐं ह्रीं श्रीं तमोपहायै नमः ।
३६२ ॐ ऐं ह्रीं श्रीं चित्यै नमः ।
३६३ ॐ ऐं ह्रीं श्रीं तत्पदलक्ष्यार्थायै नमः।
३६४ ॐ ऐं ह्रीं श्रीं चिदेकरसरूपिण्यै नमः।
३६५ ॐ ऐं ह्रीं श्रीं स्वात्मानन्दलवीभूतब्रह्माद्यानन्दसन्तत्यै नमः।
३६६ ॐ ऐं ह्रीं श्रीं परायै नमः ।
३६७ ॐ ऐं ह्रीं श्रीं प्रत्यक्चितीरूपायै नमः।
३६८ ॐ ऐं ह्रीं श्रीं पश्यन्त्यै नमः ।
३६९ ॐ ऐं ह्रीं श्रीं परदेवतायै नमः ।
३७० ॐ ऐं ह्रीं श्रीं मध्यमायै नमः ।
३७१ ॐ ऐं ह्रीं श्रीं वैखरीरूपायै नमः।
३७२ ॐ ऐं ह्रीं श्रीं भक्तमानसहंसिकायै नमः।
३७३ ॐ ऐं ह्रीं श्रीं कामेश्वरप्राणनाड्यै नमः।
३७४ ॐ ऐं ह्रीं श्रीं कृतज्ञायै नमः ।
३७५ ॐ ऐं ह्रीं श्रीं कामपूजितायै नमः।
३७६ ॐ ऐं ह्रीं श्रीं शृङ्गाररससम्पूर्णायै नमः।
३७७ ॐ ऐं ह्रीं श्रीं जयायै नमः ।
३७८ ॐ ऐं ह्रीं श्रीं जालन्धरस्थितायै नमः।
३७९ ॐ ऐं ह्रीं श्रीं ओड्याणपीठनिलयायै नमः।
३८० ॐ ऐं ह्रीं श्रीं बिन्दुमण्डलवासिन्यै नमः।
३८१ ॐ ऐं ह्रीं श्रीं रहोयागक्रमाराध्यायै नमः।
३८२ ॐ ऐं ह्रीं श्रीं रहस्तर्पणतर्पितायै नमः।
३८३ ॐ ऐं ह्रीं श्रीं सद्यःप्रसादिन्यै नमः।
३८४ ॐ ऐं ह्रीं श्रीं विश्वसाक्षिण्यै नमः।
३८५ ॐ ऐं ह्रीं श्रीं साक्षिवर्जितायै नमः।
३८६ ॐ ऐं ह्रीं श्रीं षडङ्गदेवतायुक्तायै नमः।
३८७ ॐ ऐं ह्रीं श्रीं षाड्गुण्यपरिपूरितायै नमः।
३८८ ॐ ऐं ह्रीं श्रीं नित्यक्लिन्नायै नमः।
३८९ ॐ ऐं ह्रीं श्रीं निरुपमायै नमः ।
३९० ॐ ऐं ह्रीं श्रीं निर्वाणसुखदायिन्यै नमः।
३९१ ॐ ऐं ह्रीं श्रीं नित्याषोडशिकारूपायै नमः।
३९२ ॐ ऐं ह्रीं श्रीं श्रीकण्ठार्धशरीरिण्यै नमः।
३९३ ॐ ऐं ह्रीं श्रीं प्रभावत्यै नमः ।
३९४ ॐ ऐं ह्रीं श्रीं प्रभारूपायै नमः ।
३९५ ॐ ऐं ह्रीं श्रीं प्रसिद्धायै नमः ।
३९६ ॐ ऐं ह्रीं श्रीं परमेश्वर्यै नमः ।
३९७ ॐ ऐं ह्रीं श्रीं मूलप्रकृत्यै नमः ।
३९८ ॐ ऐं ह्रीं श्रीं अव्यक्तायै नमः ।
३९९ ॐ ऐं ह्रीं श्रीं व्यक्ताव्यक्तस्वरूपिण्यै नमः।
४०० ॐ ऐं ह्रीं श्रीं व्यापिन्यै नमः ।
४०१ ॐ ऐं ह्रीं श्रीं विविधाकारायै नमः।

४०३ ॐ ऐं ह्रीं श्रीं महाकामेशनयनकुमुदाह्लादकौमुद्यै नमः।
४०४ ॐ ऐं ह्रीं श्रीं भक्तहार्दतमोभेदभानुमद्भानुसन्तत्यै नमः ।
४०५ ॐ ऐं ह्रीं श्रीं शिवदूत्यै नमः ।
४०६ ॐ ऐं ह्रीं श्रीं शिवाराध्यायै नमः।
४०७ ॐ ऐं ह्रीं श्रीं शिवमूर्त्यै नमः ।
४०८ ॐ ऐं ह्रीं श्रीं शिवङ्कर्यै नमः ।
४०९ ॐ ऐं ह्रीं श्रीं शिवप्रियायै नमः ।
४१० ॐ ऐं ह्रीं श्रीं शिवपरायै नमः ।
४११ ॐ ऐं ह्रीं श्रीं शिष्टेष्टायै नमः ।
४१२ ॐ ऐं ह्रीं श्रीं शिष्टपूजितायै नमः।
४१३ ॐ ऐं ह्रीं श्रीं अप्रमेयायै नमः ।
४१४ ॐ ऐं ह्रीं श्रीं स्वप्रकाशायै नमः।
४१५ ॐ ऐं ह्रीं श्रीं मनोवाचामगोचरायै नमः।
४१६ ॐ ऐं ह्रीं श्रीं चिच्छक्त्यै नमः ।
४१७ ॐ ऐं ह्रीं श्रीं चेतनारूपायै नमः।
४१८ ॐ ऐं ह्रीं श्रीं जडशक्त्यै नमः ।
४१९ ॐ ऐं ह्रीं श्रीं जडात्मिकायै नमः।
४२० ॐ ऐं ह्रीं श्रीं गायत्र्यै नमः ।
४२१ ॐ ऐं ह्रीं श्रीं व्याहृत्यै नमः ।
४२२ ॐ ऐं ह्रीं श्रीं सन्ध्यायै नमः ।
४२३ ॐ ऐं ह्रीं श्रीं द्विजवृन्दनिषेवितायै नमः।
४२४ ॐ ऐं ह्रीं श्रीं तत्त्वासनायै नमः ।
४२५ ॐ ऐं ह्रीं श्रीं तस्यै नमः ।
४२६ ॐ ऐं ह्रीं श्रीं तुभ्यं नमः ।
४२७ ॐ ऐं ह्रीं श्रीं अय्यै नमः ।
४२८ ॐ ऐं ह्रीं श्रीं पञ्चकोशान्तरस्थितायै नमः।
४२९ ॐ ऐं ह्रीं श्रीं निःसीममहिम्ने नमः।
४३० ॐ ऐं ह्रीं श्रीं नित्ययौवनायै नमः।
४३१ ॐ ऐं ह्रीं श्रीं मदशालिन्यै नमः ।
४३२ ॐ ऐं ह्रीं श्रीं मदाघूर्णितरक्ताक्ष्यै नमः।
४३३ ॐ ऐं ह्रीं श्रीं मदपाटलगण्डभुवे नमः।
४३४ ॐ ऐं ह्रीं श्रीं चन्द्रनद्रवदिग्धाङ्ग्यै नमः।
४३५ ॐ ऐं ह्रीं श्रीं चाम्पेयकुसुमप्रियायै नमः।
४३६ ॐ ऐं ह्रीं श्रीं कुशलायै नमः ।
४३७ ॐ ऐं ह्रीं श्रीं कोमलाकारायै नमः।
४३८ ॐ ऐं ह्रीं श्रीं कुरुकुल्लायै नमः ।
४३९ ॐ ऐं ह्रीं श्रीं कुलेश्वर्यै नमः ।
४४० ॐ ऐं ह्रीं श्रीं कुलकुण्डालयायै नमः।
४४१ ॐ ऐं ह्रीं श्रीं कौलमार्गतत्परसेवितायै नमः।
४४२ ॐ ऐं ह्रीं श्रीं कुमारगणनाथाम्बायै नमः।
४४३ ॐ ऐं ह्रीं श्रीं तुष्ट्यै नमः ।
४४४ ॐ ऐं ह्रीं श्रीं पुष्ट्यै नमः ।
४४५ ॐ ऐं ह्रीं श्रीं मत्यै नमः ।
४४६ ॐ ऐं ह्रीं श्रीं धृत्यै नमः ।
४४७ ॐ ऐं ह्रीं श्रीं शान्त्यै नमः ।
४४८ ॐ ऐं ह्रीं श्रीं स्वस्तिमत्यै नमः ।
४४९ ॐ ऐं ह्रीं श्रीं कान्त्यै नमः ।
४५० ॐ ऐं ह्रीं श्रीं नन्दिन्यै नमः ।
४५१ ॐ ऐं ह्रीं श्रीं विघ्ननाशिन्यै नमः।
४५२ ॐ ऐं ह्रीं श्रीं तेजोवत्यै नमः ।
४५३ ॐ ऐं ह्रीं श्रीं त्रिनयनायै नमः ।
४५४ ॐ ऐं ह्रीं श्रीं लोलाक्षीकामरूपिण्यै नमः।
४५५ ॐ ऐं ह्रीं श्रीं मालिन्यै नमः ।
४५६ ॐ ऐं ह्रीं श्रीं हंसिन्यै नमः ।
४५७ ॐ ऐं ह्रीं श्रीं मात्रे नमः ।
४५८ ॐ ऐं ह्रीं श्रीं मलयाचलवासिन्यै नमः।
४५९ ॐ ऐं ह्रीं श्रीं सुमुख्यै नमः ।
४६० ॐ ऐं ह्रीं श्रीं नलिन्यै नमः ।

४६१ ॐ ऐं ह्रीं श्रीं सुभ्रुवे नमः ।
४६२ ॐ ऐं ह्रीं श्रीं शोभनायै नमः ।
४६३ ॐ ऐं ह्रीं श्रीं सुरनायिकायै नमः।
४६४ ॐ ऐं ह्रीं श्रीं कालकण्ठ्यै नमः।
४६५ ॐ ऐं ह्रीं श्रीं कान्तिमत्यै नमः ।
४६६ ॐ ऐं ह्रीं श्रीं क्षोभिण्यै नमः ।
४६७ ॐ ऐं ह्रीं श्रीं सूक्ष्मरूपिण्यै नमः।
४६८ ॐ ऐं ह्रीं श्रीं वज्रेश्वर्यै नमः ।
४६९ ॐ ऐं ह्रीं श्रीं वामदेव्यै नमः ।
४७० ॐ ऐं ह्रीं श्रीं वयोऽवस्थाविवर्जितायै नमः।
४७१ ॐ ऐं ह्रीं श्रीं सिद्धेश्वर्यै नमः ।
४७२ ॐ ऐं ह्रीं श्रीं सिद्धविद्यायै नमः ।
४७३ ॐ ऐं ह्रीं श्रीं सिद्धमात्रे नमः ।
४७४ ॐ ऐं ह्रीं श्रीं यशस्विन्यै नमः ।
४७५ ॐ ऐं ह्रीं श्रीं विशुद्धिचक्रनिलयायै नमः।
४७६ ॐ ऐं ह्रीं श्रीं आरक्तवर्णायै नमः।
४७७ ॐ ऐं ह्रीं श्रीं त्रिलोचनायै नमः ।
४७८ ॐ ऐं ह्रीं श्रीं खट्वाङ्गादिप्रहरणायै नमः।
४७९ ॐ ऐं ह्रीं श्रीं वदनैकसमन्वितायै नमः।
४८० ॐ ऐं ह्रीं श्रीं पायसान्नप्रियायै नमः।
४८१ ॐ ऐं ह्रीं श्रीं त्वक्स्थायै नमः ।
४८२ ॐ ऐं ह्रीं श्रीं पशुलोकभयङ्कर्यै नमः।

४८३ ॐ ऐं ह्रीं श्रीं अमृतादिमहाशक्तिसंवृतायै नमः ।
४८४ ॐ ऐं ह्रीं श्रीं डाकिनीश्वर्यै नमः ।
४८५ ॐ ऐं ह्रीं श्रीं अनाहताब्जनिलयायै नमः।

४८६ ॐ ऐं ह्रीं श्रीं श्यामाभायै नमः ।
४८७ ॐ ऐं ह्रीं श्रीं वदनद्वयायै नमः ।
४८८ ॐ ऐं ह्रीं श्रीं द्रंष्ट्रोज्ज्वलायै नमः।
४८९ ॐ ऐं ह्रीं श्रीं अक्षमालादिधरायै नमः।
४९० ॐ ऐं ह्रीं श्रीं रुधिरसंस्थितायै नमः।

४९१ ॐ ऐं ह्रीं श्रीं कालरात्र्यादिशक्त्यौघवृतायै नमः।
४९२ ॐ ऐं ह्रीं श्रीं स्निग्धौदनप्रियायै नमः।
४९३ ॐ ऐं ह्रीं श्रीं महावीरेन्द्रवरदायै नमः।
४९४ ॐ ऐं ह्रीं श्रीं राकिण्यम्बास्वरूपिण्यै नमः।
४९५ ॐ ऐं ह्रीं श्रीं मणिपूराब्जनिलयायै नमः।

४९६ ॐ ऐं ह्रीं श्रीं वदनत्रयसंयुतायै नमः।
४९७ ॐ ऐं ह्रीं श्रीं वज्रादिकायुधोपेतायै नमः।
४९८ ॐ ऐं ह्रीं श्रीं डामर्यादिभिरावृतायै नमः।
४९९ ॐ ऐं ह्रीं श्रीं रक्तवर्णायै नमः ।
५०० ॐ ऐं ह्रीं श्रीं मांसनिष्ठायै नमः ।
५०१ ॐ ऐं ह्रीं श्रीं गुडान्नप्रीतमानसायै नमः।
५०२ ॐ ऐं ह्रीं श्रीं समस्तभक्तसुखदायै नमः।
५०३ ॐ ऐं ह्रीं श्रीं लाकिन्यम्बास्वरूपिण्यै नमः।
५०४ ॐ ऐं ह्रीं श्रीं स्वाधिष्ठानाम्बुजगतायै नमः।
५०५ ॐ ऐं ह्रीं श्रीं चतुर्वक्त्रमनोहरायै नमः।
५०६ ॐ ऐं ह्रीं श्रीं शूलाद्यायुधसम्पन्नायै नमः।
५०७ ॐ ऐं ह्रीं श्रीं पीतवर्णायै नमः ।
५०८ ॐ ऐं ह्रीं श्रीं अतिगर्वितायै नमः।
५०९ ॐ ऐं ह्रीं श्रीं मेदोनिष्ठायै नमः ।

५१० ॐ ऐं ह्रीं श्रीं मधुप्रीतायै नमः ।
५११ ॐ ऐं ह्रीं श्रीं बन्धिन्यादिसमन्वितायै नमः।
५१२ ॐ ऐं ह्रीं श्रीं दध्यन्नासक्तहृदयायै नमः।
५१३ ॐ ऐं ह्रीं श्रीं काकिनीरूपधारिण्यै नमः।
५१४ ॐ ऐं ह्रीं श्रीं मूलाधाराम्वुजारूढायै नमः।
५१५ ॐ ऐं ह्रीं श्रीं पञ्चवक्त्रायै नमः ।
५१६ ॐ ऐं ह्रीं श्रीं अस्थिसंस्थितायै नमः।
५१७ ॐ ऐं ह्रीं श्रीं अङ्कुशादिप्रहरणायै नमः।
५१८ ॐ ऐं ह्रीं श्रीं वरदादिनिषेवितायै नमः।
५१९ ॐ ऐं ह्रीं श्रीं मुद्गौदनासक्तचित्तायै नमः।
५२० ॐ ऐं ह्रीं श्रीं साकिन्यम्बास्वरूपिण्यै नमः।
५२१ ॐ ऐं ह्रीं श्रीं आज्ञाचक्राब्जनिलयायै नमः।
५२२ ॐ ऐं ह्रीं श्रीं शुक्लवर्णायै नमः।
५२३ ॐ ऐं ह्रीं श्रीं षडाननायै नमः ।
५२४ ॐ ऐं ह्रीं श्रीं मज्जासंस्थायै नमः।

५२५ ॐ ऐं ह्रीं श्रीं हंसवती मुख्यशक्तिसमन्वितायै नमः ।

५२६ ॐ ऐं ह्रीं श्रीं हरिद्रान्नैकरसिकायै नमः।
५२७ ॐ ऐं ह्रीं श्रीं हाकिनीरूपधारिण्यै नमः।
५२८ ॐ ऐं ह्रीं श्रीं सहस्रदलपद्मस्थायै नमः।
५२९ ॐ ऐं ह्रीं श्रीं सर्ववर्णोपशेभितायै नमः।
५३० ॐ ऐं ह्रीं श्रीं सर्वायुधधरायै नमः।
५३१ ॐ ऐं ह्रीं श्रीं शुक्लसंस्थितायै नमः।
५३२ ॐ ऐं ह्रीं श्रीं सर्वतोमुख्यै नमः ।
५३३ ॐ ऐं ह्रीं श्रीं सर्वौदनप्रीतचित्तायै नमः।
५३४ ॐ ऐं ह्रीं श्रीं याकिन्यम्बास्वरूपिण्यै नमः।
५३५ ॐ ऐं ह्रीं श्रीं स्वाहायै नमः ।
५३६ ॐ ऐं ह्रीं श्रीं स्वधायै नमः ।
५३७ ॐ ऐं ह्रीं श्रीं अमत्यै नमः ।
५३८ ॐ ऐं ह्रीं श्रीं मेधायै नमः ।
५३९ ॐ ऐं ह्रीं श्रीं श्रुत्यै नमः ।
५४० ॐ ऐं ह्रीं श्रीं स्मृत्यै नमः ।
५४१ ॐ ऐं ह्रीं श्रीं अनुत्तमायै नमः ।
५४२ ॐ ऐं ह्रीं श्रीं पुण्यकीर्त्यै नमः ।
५४३ ॐ ऐं ह्रीं श्रीं पुण्यलभ्यायै नमः।
५४४ ॐ ऐं ह्रीं श्रीं पुण्यश्रवणकीर्तनायै नमः।
५४५ ॐ ऐं ह्रीं श्रीं पुलोमजार्चितायै नमः।
५४६ ॐ ऐं ह्रीं श्रीं. वन्धमोचन्यै नमः ।
५४७ ॐ ऐं ह्रीं श्रीं वन्धुरालकायै नमः।
५४८ ॐ ऐं ह्रीं श्रीं विमर्शरूपिण्यै नमः।
५४९ ॐ ऐं ह्रीं श्रीं विद्यायै नमः ।
५५० ॐ ऐं ह्रीं श्रीं वियदादिजगत्प्रसवे नमः।
५५१ ॐ ऐं ह्रीं श्रीं सर्वव्याधिप्रशमन्यै नमः।
५५२ ॐ ऐं ह्रीं श्रीं सर्वमृत्युनिवारिण्यै नमः।
५५३ ॐ ऐं ह्रीं श्रीं अग्रगण्यायै नमः ।
५५४ ॐ ऐं ह्रीं श्रीं अचिन्त्यरूपायै नमः।
५५५ ॐ ऐं ह्रीं श्रीं कलिकल्मषनाशिन्यै नमः।
५५६ ॐ ऐं ह्रीं श्रीं कात्यायन्यै नमः ।
५५७ ॐ ऐं ह्रीं श्रीं कालहन्त्र्यै नमः ।
५५८ ॐ ऐं ह्रीं श्रीं कमलाक्षनिषेवितायै नमः।
५५९ ॐ ऐं ह्रीं श्रीं ताम्बूलपूरितमुख्यै नमः।
५६० ॐ ऐं ह्रीं श्रीं दाडिमीकुसुमप्रभायै नमः।
५६१ ॐ ऐं ह्रीं श्रीं मृगाक्ष्यै नमः ।
५६२ ॐ ऐं ह्रीं श्रीं मोहिन्यै नमः ।
५६३ ॐ ऐं ह्रीं श्रीं मुख्यायै नमः ।
५६४ ॐ ऐं ह्रीं श्रीं मृडान्यै नमः ।
५६५ ॐ ऐं ह्रीं श्रीं मित्ररूपिण्यै नमः ।
५६६ ॐ ऐं ह्रीं श्रीं नित्यतृप्तायै नमः ।
५६७ ॐ ऐं ह्रीं श्रीं भक्तनिधये नमः ।

५६८ ॐ ऐं ह्रीं श्रीं नियन्त्र्यै नमः ।
५६९ ॐ ऐं ह्रीं श्रीं निखिलेश्वर्यै नमः ।
५७० ॐ ऐं ह्रीं श्रीं मैत्र्यादिवासनालभ्यायै नमः।
५७१ ॐ ऐं ह्रीं श्रीं महाप्रलयसाक्षिण्यै नमः।
५७२ ॐ ऐं ह्रीं श्रीं पराशक्त्यै नमः।
५७३ ॐ ऐं ह्रीं श्रीं परानिष्ठायै नमः ।
५७४ ॐ ऐं ह्रीं श्रीं प्रज्ञानघनरूपिण्यै नमः।
५७५ ॐ ऐं ह्रीं श्रीं माध्वीपानालसायै नमः।
५७६ ॐ ऐं ह्रीं श्रीं मत्तायै नमः ।
५७७ ॐ ऐं ह्रीं श्रीं मातृकावर्णरूपिण्यै नमः।
५७८ ॐ ऐं ह्रीं श्रीं महाकैलासनिलयायै नमः।
५७९ ॐ ऐं ह्रीं श्रीं मृणालमृदुदोर्लतायै नमः।
५८० ॐ ऐं ह्रीं श्रीं महनीयायै नमः ।
५८१ ॐ ऐं ह्रीं श्रीं दयामूर्त्यै नमः ।
५८२ ॐ ऐं ह्रीं श्रीं महासाम्राज्यशालिन्यै नमः।
५८३ ॐ ऐं ह्रीं श्रीं आत्मविद्यायै नमः ।
५८४ ॐ ऐं ह्रीं श्रीं महाविद्यायै नमः ।
५८५ ॐ ऐं ह्रीं श्रीं श्रीविद्यायै नमः ।
५८६ ॐ ऐं ह्रीं श्रीं कामसेवितायै नमः।
५८७ ॐ ऐं ह्रीं श्रीं श्रीषोडशाक्षरीविद्यायै नमः।
५८८ ॐ ऐं ह्रीं श्रीं त्रिकूटायै नमः ।
५८९ ॐ ऐं ह्रीं श्रीं कामकोटिकायै नमः।
५९० ॐ ऐं ह्रीं श्रीं कटाक्षकिङ्करीभूतकमलाकोटिसेवितायै नमः।
५९१ ॐ ऐं ह्रीं श्रीं शिरःस्थितायै नमः।
५९२ ॐ ऐं ह्रीं श्रीं चन्द्रनिभायै नमः।
५९३ ॐ ऐं ह्रीं श्रीं भालस्थायै नमः।
५९४ ॐ ऐं ह्रीं श्रीं इन्द्रधनुःप्रभायै नमः।
५९५ ॐ ऐं ह्रीं श्रीं हृदयस्थायै नमः।
५९६ ॐ ऐं ह्रीं श्रीं रविप्रख्यायै नमः ।
५९७ ॐ ऐं ह्रीं श्रीं त्रिकोणान्तरदीपिकायै नमः।
५९८ ॐ ऐं ह्रीं श्रीं दाक्षायण्यै नमः ।
५९९ ॐ ऐं ह्रीं श्रीं दैत्यहन्त्र्यै नमः ।
६०० ॐ ऐं ह्रीं श्रीं दक्षयज्ञविनाशिन्यै नमः।
६०१ ॐ ऐं ह्रीं श्रीं दरान्दोलितदीर्घाक्ष्यै नमः।
६०२ ॐ ऐं ह्रीं श्रीं दरहासोज्ज्वलन्मुख्यै नमः।
६०३ ॐ ऐं ह्रीं श्रीं गुरुमूर्त्यै नमः ।
६०४ ॐ ऐं ह्रीं श्रीं गुणनिधये नमः ।
६०५ ॐ ऐं ह्रीं श्रीं गोमात्रे नमः ।
६०६ ॐ ऐं ह्रीं श्रीं गुहजन्मभुवे नमः ।
६०७ ॐ ऐं ह्रीं श्रीं देवेश्यै नमः ।
६०८ ॐ ऐं ह्रीं श्रीं दण्डनीतिस्थायै नमः।
६०९ ॐ ऐं ह्रीं श्रीं दहराकाशरूपिण्यै नमः।
६१० ॐ ऐं ह्रीं श्रीं प्रतिपन्मुख्यराकान्ततिथिमण्डलपूजितायै नमः।
६११ ॐ ऐं ह्रीं श्रीं कलात्मिकायै नमः।
६१२ ॐ ऐं ह्रीं श्रीं कलानाथायै नमः।
६१३ ॐ ऐं ह्रीं श्रीं काव्यालापविनोदिन्यै नमः।
६१४ ॐ ऐं ह्रीं श्रीं सचामररमावाणीसव्यदक्षिणसेवितायै नमः।
६१५ ॐ ऐं ह्रीं श्रीं आदिशक्त्यै नमः ।
६१६ ॐ ऐं ह्रीं श्रीं अमेयायै नमः ।
६१७ ॐ ऐं ह्रीं श्रीं आत्मने नमः ।
६१८ ॐ ऐं ह्रीं श्रीं परमायै नमः ।
६१९ ॐ ऐं ह्रीं श्रीं पावनाकृतये नमः ।

६२० ॐ ऐं ह्रीं श्रीं अनेककोटिब्रह्माण्डजनन्यै नमः।

६२१ ॐ ऐं ह्रीं श्रीं दिव्यविग्रहायै नमः।
६२२ ॐ ऐं ह्रीं श्रीं क्लींकार्यै नमः।
६२३ ॐ ऐं ह्रीं श्रीं केवलायै नमः।
६२४ ॐ ऐं ह्रीं श्रीं गुह्यायै नमः।
६२५ ॐ ऐं ह्रीं श्रीं कैवल्यपददायिन्यै नमः।
६२६ ॐ ऐं ह्रीं श्रीं त्रिपुरायै नमः।
६२७ ॐ ऐं ह्रीं श्रीं त्रिजगद्वन्द्यायै नमः।
६२८ ॐ ऐं ह्रीं श्रीं मूर्तये नमः।
६२९ ॐ ऐं ह्रीं श्रीं त्रिदशेश्वर्यै नमः।
६३० ॐ ऐं ह्रीं श्रीं त्र्यक्षर्यै नमः।
६३१ ॐ ऐं ह्रीं श्रीं दिव्यगन्धाढ्यायै नमः।
६३२ ॐ ऐं ह्रीं श्रीं सिन्दूरतिलकाञ्चितायै नमः।
६३३ ॐ ऐं ह्रीं श्रीं उमायै नमः।
६३४ ॐ ऐं ह्रीं श्रीं शैलेन्द्रतनयायै नमः।
६३५ ॐ ऐं ह्रीं श्रीं गौर्यै नमः।
६३६ ॐ ऐं ह्रीं श्रीं गन्धर्वसेवितायै नमः।
६३७ ॐ ऐं ह्रीं श्रीं विश्वगर्भायै नमः।
६३८ ॐ ऐं ह्रीं श्रीं स्वर्णगर्भायै नमः।
६३९ ॐ ऐं ह्रीं श्रीं अवरदायै नमः।
६४० ॐ ऐं ह्रीं श्रीं वागधीश्वर्यै नमः।
६४१ ॐ ऐं ह्रीं श्रीं ध्यानगम्यायै नमः।
६४२ ॐ ऐं ह्रीं श्रीं अपरिच्छेद्यायै नमः।
६४३ ॐ ऐं ह्रीं श्रीं ज्ञानदायै नमः।
६४४ ॐ ऐं ह्रीं श्रीं ज्ञानविग्रहायै नमः।
६४५ ॐ ऐं ह्रीं श्रीं सर्ववेदान्तसंवेद्यायै नमः।
६४६ ॐ ऐं ह्रीं श्रीं सत्यानन्दस्वरूपिण्यै नमः।
६४७ ॐ ऐं ह्रीं श्रीं लोपामुद्रार्चितायै नमः।

६४८ ॐ ऐं ह्रीं श्रीं लीलाक्लृप्तब्रह्माण्डमण्डलायै नमः।

६४९ ॐ ऐं ह्रीं श्रीं अदृश्यायै नमः।
६५० ॐ ऐं ह्रीं श्रीं दृश्यरहितायै नमः।
६५१ ॐ ऐं ह्रीं श्रीं विज्ञात्र्यै नमः।
६५२ ॐ ऐं ह्रीं श्रीं वेद्यवर्जितायै नमः।
६५३ ॐ ऐं ह्रीं श्रीं योगिन्यै नमः।
६५४ ॐ ऐं ह्रीं श्रीं योगदायै नमः।
६५५ ॐ ऐं ह्रीं श्रीं योग्यायै नमः।
६५६ ॐ ऐं ह्रीं श्रीं योगानन्दायै नमः।
६५७ ॐ ऐं ह्रीं श्रीं युगन्धरायै नमः।

६५८ ॐ ऐं ह्रीं श्रीं इच्छाशक्तिज्ञानशक्तिक्रियाशक्तिस्वरूपिण्यै नमः।

६५९ ॐ ऐं ह्रीं श्रीं सर्वाधारायै नमः।
६६० ॐ ऐं ह्रीं श्रीं सुप्रतिष्ठायै नमः।
६६१ ॐ ऐं ह्रीं श्रीं सदसद्रूपधारिण्यै नमः।
६६२ ॐ ऐं ह्रीं श्रीं अष्टमूर्त्यै नमः।
६६३ ॐ ऐं ह्रीं श्रीं अजाजैत्र्यै नमः।
६६४ ॐ ऐं ह्रीं श्रीं लोकयात्राविधायिन्यै नमः।
६६५ ॐ ऐं ह्रीं श्रीं एकाकिन्यै नमः।
६६६ ॐ ऐं ह्रीं श्रीं भूमरूपायै नमः।
६६७ ॐ ऐं ह्रीं श्रीं निर्द्वैतायै नमः।
६६८ ॐ ऐं ह्रीं श्रीं द्वैतवर्जितायै नमः।
६६९ ॐ ऐं ह्रीं श्रीं अन्नदायै नमः।
६७० ॐ ऐं ह्रीं श्रीं वसुधायै नमः।
६७१ ॐ ऐं ह्रीं श्रीं वृद्धायै नमः।
६७२ ॐ ऐं ह्रीं श्रीं ब्रह्मात्मैक्यस्वरूपिण्यै नमः।

